# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ४० ॥

# झाँसीश्वरी चरितम्

प्रणेता

सुबोधचन्द्र पन्त

**Rashtriya Sanskrit Sansthan**

*(Under the auspices of the Ministry of Education and Social Welfare, Govt. of India)*

**Delhi**

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*General Editor*

**Dr. G. C. Tripathi**

No. 5

# JHANSĪŚVARĪCARITAM

A modern Mahākāvya on the life history of the valiant Queen of Jhansi (1835—1858)

*Composed by*

Subodh Chandra Pant

ALLAHABAD

1979

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
दिल्ली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
गयाचरण त्रिपाठी

—•—

पञ्चमं प्रसूनम्

# झाँसीश्वरीचरितम्

—•—

प्रणेता
सुबोध चन्द्र पन्तः

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः-२

# झाँसीश्वरीचरितम्

झाँसीराज्यस्याधीश्वरीं 'लक्ष्मीबाई' मधिकृत्य विरचितं नूतनं महाकाव्यम्

प्रणेता

सुबोध चन्द्र पन्तः

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

मोतीलाल नेहरू पार्क

प्रयागः-२

१९७९

## FOREWORD

The Vidyapeetha takes pride in presenting to the lovers of Sanskrit literature an excellent piece of creative Sanskrit writing, the *Jhansīśvarīcaritam* composed by Shri Subodha Chandra Pant, a member of the staff of this Vidyapeetha. After *Vāṇīvilasitam*, it is the second work of modern Sanskrit literature that the Vidyapeetha has brought to light.

*Jhansīśvarīcaritam* has the glorious career of Lakṣmībai (1835-58), the immortal queen of Jhansi, as its central theme who fell for her motherland valiantly fighting against the tyranny of foreign oppressors, the British, who were much more strong and resourceful than this gracefnl lady who sacrificed herself upon the altar of freedom in her prime of youth. She has carved out a parmanent place for herself in the hearts of her countrymen and her vigorous and eventful, although shortlived, career has inspired the Indians all through their struggle for freedom from British subjugation. It is impossible to forget the image of this royal lady riding on a steed with her adopted son tied upon her back, holding the reins of the horse in her mouth, cutting through the rows of an ovrerwhelming multitude of the enemy armed to the nails, with swords held in her both hands.

*Jhansīśvarīcaritam* is a Mahākāvya with a difference. Whereas the classical Sanskrit Mahākāvyas devote much of their space elaborating upon the beauties of the subjects like sunrise, sunset, moon, rivers, mountains etc. hampering thereby the progress of the story and the natural development of the plot, in *Jhansīśvarīcaritam* the story develops itself smoothly and rapidly maintaining the suspense and interest of the reader throughout. The work is further studded with highly natural conversations and projections of the mental state of characters. Indeed, for me the greatest achievement of *Jhansīśvarīcaritam* lies in its subtle depiction of the internal feelings of the characters under different circumstances, feelings which bring to light their deep cravings for a free and liberated motherland.

The language of the work is chaste and polished. Corresponding to its central theme, it is vigorous and forceful in nature. Shri Pant has clearly exhibited that Sanskrit is a powerful medium for poetic compositions even to this day.

Shri Pant is a gifted poet. He composes verses not only in Sanskrit but also in Hindi and Bengali. It is surprising how he manages to spare time for his manifold literary persuits amidst heavy administrative duties and family liabilities.

*Jhansīśvarīcaritam* is a welcome addition to the branch of Sanskrit historical Mahākāvyas and I can unhesitatingly recommend it to any reader desirous of enjoying refined aesthetic pleasure through the medium of Sanskrit.

Allahabad
24th December, 1979

**G. C. Tripathi**
***Principal***
**G. N. Jha K. S. Vidyapeetha**

# शुभाशंसनम्

संस्कृतवाङ्मये वीरकाव्यानि खल्वङ्गुलिगण्यानि । महाभारतमुपजीव्य वेणीसंहारादिकाव्यजातं सुधीजनैः परिचीयत एव । इतस्तु मौद्गलानां भारतप्रवेशानन्तरं भारतभुवि बहवो वीरधुरन्धरा वसुन्धरामिमां पावयामासुः, असिवीणाया झणत्कारैः सणत्कारैश्च विश्वम्भरायाः श्रोतृपालीर्मुखरयाञ्चक्रुश्च । मध्ये मध्ये कविरत्नैस्तदीयानि चरितानि समवलम्ब्य कथा नाटकानि च संदृब्धानि । तत्र शिववीरचरितमाश्रित्य कविरत्नैरम्बिकादत्तव्यासमहोदयैर्विरचितं शिवराजविजयं केषां रसिकानां मानसेषु वीररसभावं न सञ्चारयति ? प्रतापविजयनामकं नाटकमपि संस्कृतवाङ्मयशृङ्खलायामनितरसाधारणं कटकरूपत्वं बिभर्ति । एवमेव कविवरैर्वर्णेकरमहोदयैर्विरचितं छत्रपतिकाव्यं कामपि परिपूर्तिं संस्कृतवाङ्मयस्य विदधाति । सत्येवं नेदिष्ठेऽनेहसि स्वजनुषा भारतस्य वीरभुवं बुन्देलखण्डं पवित्रयन्त्या झांसीश्वर्याश्चरितमाश्रित्य न कस्यचित् कविवरस्य लेखनी व्यापप्रे । शताब्दीपूर्त्यवसरे तत्पूर्तिमाकाङ्क्षता कविरत्नेन स्वनामधन्येन श्रीसुबोधचन्द्रमहाभागेन वीररसगर्भशान्तरसाकाराऽऽकारेण महनीयं कविकर्मेदं समनुष्ठितं साफल्यं चालम्भि तद्गुम्फने रसभावानुरूपे । सत्कुलप्रसूताया धीराया गभीरायाः सकलगुणवरीयस्या नायिकायाश्चरितसंकीर्तनेन सार्धमेव छन्दोऽलङ्कारप्रकृतिवर्णनादिकमनितरसाधारणमिह काव्ये तथा संप्रोतं यदस्य प्रबन्धस्य महाकाव्यता निर्विचिकित्समुद्घोषयितुमलम् । एतस्य साधीयसः कवनस्य कृते श्रीमन्तः पन्तमहोदयाः साधुवादैरभिनन्द्यन्ते, निवेद्यन्ते च बुधवरा झाँसीश्वर्या नैवेद्येन स्वान्तनिशान्तं सुवासयन्त्विति ।

**डॉ० भागीरथीप्रसादत्रिपाठी 'वागीशः शास्त्री'**
**अनुसन्धानसंस्थाननिदेशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य ।**

वाराणसी

**एकादश्यां सहस्यमासे बहुलपक्षे २०३६ वै०**

काव्यमेतत् कीर्त्तये संस्कृतसाहित्याभिवृद्धये च स्यात् ।

आदित्यनाथझा
उपराज्यपालः, दिल्ली ।

पुस्तक नितान्त मौलिक है तथा उत्कृष्ट रचनाओं में स्थान पाने योग्य है । विषय-वस्तु, भाषा और शैली तीनों दृष्टियों से पुस्तक उत्तम है ।

बदरीनाथ शुक्ल
कुलपति, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

"झाँसीश्वरीचरितम्" काव्य की भाषा गुणमयी, अलंकृत तथा भाव-पूर्ण है । इसका रचयिता कवि सर्वथा साधु-वाद का पात्र है ।

प्रो० चण्डिका प्रसाद शुक्ल
अध्यक्ष, संस्कृत विभाग, इलाहाबाद विश्वविद्यालय।

# किञ्चिद् विनिवेदितम्

पद्यबद्धेयं कथा। इतो न्यूनतो विंशे वर्षे गाधि ( गाजी ) पुराख्ये पत्तने निर्मिता लालसावद् दुर्निवारा केवलनैव मासेनोपनिबद्धा।

अद्यैकादश द्वादश वा हायनान्यस्य चरितस्य वाराणसेयेन ( अधुना सम्पूर्णानन्द ) संस्कृतविश्वविद्यालयेन प्रकाशनाय स्वीकृतस्य। अर्थाभाववशात् कार्यान्तरव्यापृतत्वाद् वातिविलम्बेनावसीदन्तीयं कृतिः प्रयागस्थस्य गंगानाथ - झा - केन्द्रीय - संस्कृत - विद्यापीठस्य प्राचार्यवर्यैस्तत्रभवद्भिर्गुणज्ञललाटन्तपैः सहृदयशिरोमणिभिः पण्डितगयाचरणत्रिपाठिमहाभागैरुद्धृता राष्ट्रियसंस्कृतसंस्थानेनोररीकृता।

आचार्यवर्यैः पण्डितरघुनाथशर्मभिश्चाधुना वाराणसीस्थिते संस्कृतविश्वविद्यालये कुलपतिभिः पण्डितबदरीनाथशुक्लैश्च दिल्लयुपराज्यपालैः स्वर्गस्थैः पण्डितादित्यनाथैश्च भूयो भूयः प्रशंसितेयं रचनेति तत्रभवतां तेषाममधर्णतां वहामि।

काव्यजीवनशैशवजस्य चापलस्य विजृम्भितमिदं ममानन्दायाकल्पत। अन्येषामुपकाराय प्रभवेन्न वेति न जाने। रसध्वन्यादिषु नात्र दृष्टिः। ते वर्तन्ते वा न वेत्यलंकारशास्त्रावगाहनशुद्धबुद्धयः पण्डितपुङ्गवा एव विचारयितुं क्षमाः। यथा बालकः शीघ्रत्वेन पदविन्यासेशेषं बन्धनं न पश्यति तथैवात्राकरवम्। प्रमादं प्रति जागरूका विद्वांसः कृपापूर्वकं मर्षयन्तु।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।<br>
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

इति विदुषामाश्रवस्य

भारद्वाजस्य सुबोधचन्द्रशर्मणः।

# विषयानुक्रमः

# झाँसीश्वरीचरितम्

## सर्गः प्रथमः

शक्तिः समस्तस्य भवस्य सर्वा या वर्त्तते प्रत्यणु जीवसङ्घे ।
लब्ध्वैव यद्भास्वरभावमीषन्नेत्रद्वयं भास्वरतां तनोति ॥१॥

ऊष्मा समेत्य प्रतिनाडि यस्या रक्तं सदा रेपयते समन्तात् ।
लोकः समग्रो विततेषु मायापाशेषु यस्याः पततीह तूर्णम् ॥२॥

यातङ्कदानेन रजस्तमश्च कुण्ठां सदा ग्राहयते प्रचण्डा ।
लोकाभिभूतेर्विरते यतस्ते वैवश्यदण्डेन परं विनीते ॥३॥

या कैटभं शातयितुं मधुं च ब्रह्मण्यपङ्क्तं व्यतरद्विचारम् ।
सच्चिन्तनेन प्रसभं विदूरे येनाकरोच्छक्तिमसौ तमोजाम् ॥४॥

चक्रे स्वलीलावशतो हरिं या शेषस्य पृष्ठे शयने विलग्नम् ।
पश्चाच्च कार्यार्थमदत्त तस्मै जागर्त्तिदीप्तिं नवशक्तियुक्ताम् ॥५॥

यस्याः कृपाया महिषासुरस्य यातोभिमानः प्रलयं क्षणेन ।
उद्यास्य या रक्तकणान् समन्ताद्दैत्यावलीनां हृदयं बिभिन्द ॥६॥

या चण्डमुण्डौ विनिहत्य कुण्डौ चामुण्डया ख्यातिमियाय नाम्ना ।
पापद्विदन्तस्य विसारशुण्डां सत्ताविलोपाय सदा चकर्त्त ॥७॥

नम्रे षु या नम्रतमा रणेपि जाता द्रढिष्ठा च दृढेषु भूत्वा ।
कश्चिच्छमं लब्धवती विमर्द्य शुम्भं निशुम्भं च भटप्रकाण्डे ॥८॥

या रक्तबीजेन कृतां कथञ्चिदुद्दण्डतां सोढुमपारयन्त ।
भूत्वा महाकालसमा कराला काली जहाराघसमुच्चयं तम् ॥९॥

या कीलितीकृत्य जवेन कंससर्पं स्वभ्रूवृत्तमदान्मनोज्ञम् ।
शाकैर्जगत्पालनकृत्यलग्ना शाकम्भरीनाम बभौ दयाल्वी ॥१०॥

या सूदनैकप्रवणापि रक्षामात्रं जनानामुररीकरोति ।
दुर्वृत्तनाशेपि सरत्यजस्रं चित्तेनुकम्पावनमेव यस्याः ॥११॥

ध्वंसेपि यद्व्यत्नकृते निगूढो निर्माणबीजस्य विकास एव ।
कारुण्य एकीकृतशोणिता या धावत्यघं तद्रसमिश्रणेन ॥१२॥

भृङ्गावलिर्यत्कचपाश एकः पङ्केजमास्यं सुतरां प्रसिद्धम् ।
इन्दीवरे दृग्युगमुत्तमेद्धमाश्चर्यकृत्तेज उदञ्चदाभम् ॥१३॥

शङ्खं सदोद्वेजयते शिरोधिर्वक्षः प्रसादीकुरुते प्रसादम् ।
सन्तानभद्रासनतां गतोङ्को लक्ष्मीं दलानां हरतेङ्घ्रियुग्मम् ॥१४॥

या योगनिद्राशयनेतिगाढे सुष्वाप वर्षाणि शतं ततश्च ।
सार्धं जजागार पराक्रमेण नव्येन रेजे भरताचलायाम् ॥१५॥

यस्याः प्रचण्डैः किरणैरुदग्रा ज्वाला विपुस्फोर पदे पदे सा ।
स्फूर्तिं यतः प्रापुरपास्तवीर्या वज्रं परेषां निपपात गर्वे ॥१६॥

यस्याः कृपातः प्रबभूव राजस्थानं पराप्तुं जगदाश्रयत्वम् ।
आपूरयच्चेतनतां प्रवीरस्थानं बभूव प्रतिकायमिद्धम् ॥१७॥

सा पद्मिनी रश्मिरभूद्यदीयो या जौहराख्यस्य जनी व्रतस्य ।
शीर्षेश्वरीणां मनुजाधमानां जाज्वल्यमाना च गदा बभूव ॥१८॥

धन्या बभूवुर्दयितव्रतास्तां निर्भीकतां सात्विकता परापत् ।
आगच्छदुग्रा व्यभिचारिणोग्रे सम्पिण्डिता भीर्जगतीतलस्य ॥१९॥

सञ्शक्तिसिंहस्य सुता यदीय आगच्छदेकः किरणोत्र देशे ।
दिल्लीपतेर्या छुरिका निखाता वक्षस्यघं लम्पटतां चकर्त्त ॥२०॥

अंशुस्ततः कर्मवती यदीयः खड्गद्वयेनारिमधावदुग्रा ।
अग्रस्यतापन्निवहैरकस्मादारातिमुण्डावलिरेकदैव ॥२१॥

अन्वर्थतां यत्किरणेन गच्छन्त्यासीन्महाराष्ट्रधरातिधन्या ।
निद्राप्रसारेण विमुक्तिमापत् तं दुर्दमं चेतनताविलासम् ॥२२॥

नारीप्रभावीजमुदेत्य जीजाबाई यदीयः किरणो रराज ।
यस्यास्तनूजः शिवराज एको यः पावयामास जगत्समग्रम् ॥२३॥

दुर्गा महाराष्ट्रधरित्रिदुर्गा यद्रश्मिरेकः सुतया सहैव ।
मुक्त्येध उज्ज्वालयितुं पपात तूर्णं सजामातृकमिद्धहासम् ॥२४॥

ज्योतींषि सम्भूय समानि तानि केन्द्रे महाशक्तियुतान्यभूवन् ।
देशो यथायं जडतारतोभाद् दीपो धृतस्नेह इवायताभः ॥२५॥

तान्येव लक्ष्मीरिति जन्म लेभे लक्ष्म्याश्च चण्ड्याश्च विमिश्रितं या ।
युद्धे मुनिप्राणवसूडुपाख्य ईशाब्द एते प्रसिता बभूव ॥२६॥

दुर्गैव नारीजन इत्यवोचल्लोकस्य नेत्रे उदमीमिलच्च ।
यद्विस्मितोभूद्‌वत विस्मयोपि चक्रे समस्तं तदहृष्टपूर्वम् ॥२७॥

मृत्युं गताप्यस्ति सजीविता सा देशस्तदीयोस्त्यमरो जगत्सु ।
तस्याः कथाया अनुचिन्तनेन काव्येत्र लग्नोप्यमरो भवेद्वै ॥२८॥

कृष्णा लिखित्वा मम लेखिनीयं स्यादुज्ज्वलत्वं तनुधारि शश्वत् ।
लेखिष्यति द्रागितिवृत्तमेकं शुभ्रं तदीयासिमनुप्रपन्ना ॥२९॥

उपचिनोपि सुनिर्मलतां सदा
यदभिधाममभिगम्य सरस्वति ।
मम मनोतिथितां नय तां द्रुतं
तनुभृतं शुभधाम पराक्रमम् ॥३०॥

• • •

## सर्गो द्वितीयः

सुमनसामनुकुर्वदिवान्तरं विषयजालमतिप्रसरं तथा ।
मणिशिलाफलकोपममुत्तमं वियदसीमविभं विततं बभौ ॥१॥

उडुगणा व्यलसँल्ललिताक्षरैरुपरि हीरकखण्डशतोपमाः ।
निपतितैश्च सुमैरमरापगासलिलमध्यविकीर्णसमैः समाः ॥२॥

धृतभविष्यसुखा उत दीपिकाममलभां विनिवेश्य समन्ततः ।
रचयितुं गगनाङ्गणमुज्ज्वलं सयतना अभवन्नमराङ्गनाः ॥३॥

अतितरामुररीकृतवान् धरागुरुतरत्वमुतादितिजव्रजः ।
अवहदुत्तमकान्तिसमन्वितं मणिमयं वरमातपवारणम् ॥४॥

क्षितितलेदितिजा उत भाविनि प्रथितशोभन उत्सव उद्यताः ।
सयतनं सहकृत्वरतां गता अरचयञ्शिविराण्यखिलेश्वरे ॥५॥

प्रथममभ्यसनार्थमुताम्बरे लिखितवान् विधिरक्षरसंहतिम् ।
मनुजभाग्यलिपिं निजपाणिना पटुतरेण विलेखितुमुत्सुकः ॥६॥

उततमां परिधाय करैर्विधोरुडुगणैः प्रसितैरुत शाटिकाम् ।
शशिमुखी रजनिर्जगतोधिकं सततमेव ननर्त्त सुखावहा ॥७॥

समुदयाः क्लबनाम्न्यथवेन्द्रके सितशरीरभृतामनुचिन्तिताः ।
जडतराः कृतभाविभयेक्षणाः प्रमथिता इव नेत्रपथं गताः ॥८॥

उत भविष्यति गौरतनूजुषां ध्रुवमवेक्ष्य समाप्तमितः परम् ।
विरचितानि समाधिशतान्यलं शुशुभिरे परमं सुरशिल्पिना ॥९॥

समसरन्नमिता द्युतयो हरित्स्वमरलोक इव प्रबभौ नभः ।
उपविवेश पराप्य सभापतिमुडुसभं शशिनः श्रियमम्बरे ॥१०॥

उत विहायसकुट्टिम उल्लसञ्शशिशिशुर्विजहार निरन्तरम् ।
उडुविनोदनसाधनसंहतौ निरतचित्त उदात्तविभापथैः ॥११॥

प्रकृतिरागतवस्तुत मालिकां शतगुणां विरचय्य मुदान्विता ।
उडुपमध्यमणिं विनियोज्य च क्षितिमबीवसदुत्कमनाः स्वयम् ॥१२॥

अधिजलं विहसन् विहसन् यदा कुमुदिनीकुलबान्धव आपतत् ।
निरसने निरतो निजकालिमप्रसरणस्य किमित्यवदज्जनाः ॥१३॥

इदमशिक्ष्यतोत हिमप्रभो भवति जीव इहेदृश एव कौ ।
मधुतरं प्रतिबिम्बमवेक्ष्य स स्वरचितं प्रकृतावनुरज्जते ॥१४॥

भुवि महाजवना उत चन्द्रिकाझरचया न्यपतन्ननिशं तदा ।
तिमिरकल्मषकूटनिवारणव्रतमवाप्य महायतने रताः ॥१५॥

सुरपुरं विगताः पितरोथवा करुणभावमुपेत्य सुविह्वलाः ।
क्षितितले धृतघर्ममहातपे स्वसुकृतोष्णनिवारणमादधुः ॥१६॥

क्षितिभृतां शिखरेषु शिरस्कतामधिजगाम मृगाङ्ककरावली ।
मशहरीसदृशी ह्रदिनीह्रदाप्समुदये शयनत्वमुपेयुषि ॥१७॥

हरिणलाञ्छनभीत बभूव सा स्मररिपोरतिहासरुगुज्ज्वला ।
सुरसरिल्लहराल्यपि यत्पुरो नियतमानतमौलिरुचिर्भवेत् ॥१८॥

अधिवसुन्धरमेत्य कणे कणे सरुचि सत्त्वमुदायत मूर्तिमत् ।
सितकरस्य करैर्गमितं जलं विमलतामवगाढ उडुव्रजः ॥१९॥

नवलतां विरचय्य सहस्रशः क्षितितले च जलेषु च कौमुदी ।
प्रतिकृतीरतिविस्मयदायिनीरभिलिलेख परां पटुतां गता ॥२०॥

तरुदलावलिरन्ध्रशतक्षरच्छशिविभाकृत जालकसंहतिम् ।
चपलतामवलोक्य समीरणेष्वपसृता निरमुच्यत सा मुहुः ॥२१॥

द्रुमदला अतिभक्तिसमन्विता भगवतः परिचारिकतां गताः ।
परिधिवीजनमेकमवीजयन्नविरलं मृदुलत्वभरान्विताः ॥२२॥

किरणचूर्णमिव प्रसृतं विधोर्विमलभे तटिनीसलिलोदरे ।
सरुचि तन्महिमानमुदाहरच्छ्रवसुखेन तरङ्गरवेण तत् ॥२३॥

चरणधावनहेतुसमुत्सुकाः शशधरस्य बभुः सरितः समाः ।
लहरयः शतशोथ सहस्रशः प्रतिहता अपि तीरभुवाद्यम् ॥२४॥

अवगतेर्विषयोयमभूत्तदा त्रिभुवने कमलां सकलामलाम् ।
प्रविततीकुरुते कमलालया तिमिरनुन्महिमानमुपेयुषी ॥२५॥

अमृतमेव रराजतरां नभस्यमृतमेव रराजतरां क्षितौ ।
अनुशयं शयितो जन आप्तवाननशयितोलभताखिलमेव तत् ॥२६॥

द्विजवरस्तु कलत्रसमन्वितश्छदिषि कोपि सचिन्त उपाविशत् ।
तततरं श्वसिति स्म मुहुर्मुहुर्विकटफूत्कृतिसर्पपतिप्रभः ॥२७॥

उपरि चन्द्रकलारजतं बभौ त्रिभुवनाथ चमत्कृतिमाहरत् ।
अलसदासनतुल्यमधश्च तज्जनविमोहनकर्मरतिं वहत् ॥२८॥

अलिकवर्त्तिन आवृतमस्तकः शशधरस्य करैर्गिरिशो यथा ।
सहित उज्ज्वलकान्ति हिमान्युपर्युपविवेश हिमालयकन्यया ॥२९॥

द्विजवरस्य कलत्रमपि स्थितं पदयुगं नयनद्वयमाहरत् ॥
अविरतं पतिधर्मपरायणं समधिकं धृतचिन्तितमावभौ ॥३०॥

नियमवान् विरराज मुखोद्भवः स्मितमुवाह महाच्छमकृत्रिमम् ।
अलिकमत्यधिकां कथयद्व्यथां लहरकान्ति सरेखममातपरम् ॥३१॥

शमधनस्य यथा तटिनीपतेः शम इतश्चलताकलितासनः ।
दिशि दिशि प्रथनाय पथः परान्मृगयमाण उदैद्वडवानलः ॥३२॥

अथ जहौ निमिषेण मुखं गतं नियमनं वचनस्य रहस्यताम् ।
सरसिजं सरजःकणमुन्नदद्भ्रमरराजि चकाश इवाद्भुतम् ॥३३॥

अथ रवः श्रवणैकसुधारसो वदनघोषवतीत उपागतः ।
दृढमभूच्च तथाकुलता यथा नयनयोर्जलबिन्दव आगताः ॥३४॥

द्विज उवाच शुभे भरतावनेरभवदेवमसह्यकृशा दशा ।
प्रहसति क्षय एत्य सुदुर्दमो लयमहो गरिमा सकलो गतः ॥३५॥

अहह सोदरमेव जनः समौ यमपुरं नयते करुणं महत् ।
मलिनकर्मरतश्च निरन्तरं सफलतां लभतेऽर्जितकाङ्क्षितः ॥३६॥

उदयनस्य समोऽभितदक्षिणो रघुकुलेश इवातिवशंवदः ।
सुसरलो भरतेन सहक्तथा शमधनश्च शमीकनिभः परम् ॥३७॥

सिततनुः स सदाद्य निरङ्कुशो दलति भारतमेतदहर्निशम् ।
सततमेव भवन्गरलाकरः फणधृताग्निरहिः शितिविग्रहः ॥३८॥

अकृतवित्स सुयोधनतां गतो वहति धुन्धुवदुद्धुरतां पराम् ।
कणिकतुल्य उरीकृतकाठिनो भवति नादिरमन्युरुदेजयः ॥३९॥

अविषयो जनपीडनशोषणावधिरहो नयनस्य निरन्तरम् ।
अहह सीदति साद्य मनस्विता वहति जीवितसंशयमुत्कटम् ॥४०॥

ददति पाञ्चनदा रुदनं सदा विवृतनूत्ननिजव्रणसञ्चयाः ।
दधति वङ्गनिवासिन आर्त्ततामहरवैरनुनादितपुष्कराः ॥४१॥

पतति हन्त वितंस उपेयिवान्नृपगणः स्वयमेव सितैः कृते ।
हसति हा स्वयमेव विमूढतां स्वविहितामवलोक्य पतन्मतिः ॥४२॥

हिमकरो नु विहायसि वर्त्तते सितशरीरभृतां विभवो न्वसौ ।
जगति भासत इन्दुकला नु तत्कपटकूटकला नु विसारिणी ॥४३॥

बलभिदासनमप्यभवत्सदा चपलतावृतयच्छरणं पुरा ।
त्रिभुवनैकपतिः कमलेक्षणोऽप्यगृह्णाच्छिशुकः स यदञ्चलम् ॥४४॥

स्थितिमिमामवलोक्य सदैव सा भरतभूर्विलपत्यमितं कृशा ।
ज्वलति चिन्तितताज्वलनोदरे करतले धृतगण्डभरा सती ॥४५॥

अकृषि शास्त्रविचिन्तनवह्निसादविरलं मम जीवनसम्पदम् ।
फलमहो अलभे किमनाशयेऽसमय एव समं प्रथमं वयः ॥४६॥

सुखयितुं किमपि प्रबभूव किं क्षणमपीह शुभे तव मानसम् ।
वितरितुं सकृदप्यशकं च किं लवमपि त्वयि तृप्तिभरस्य हा ॥४७॥

अजगवी भवितुं त्वरया समभिलषामि महाप्रलयङ्करः ।
अशितिसेनमुपेत्य मदोत्कटसदृश आहवमीक्षय उद्धुरम् ॥४८॥

मुखजबाहुजयोर्मम तेजसी कुरुगुरुप्रतिमस्य समं सदा ।
न परमस्ति सहायमिदं वपुः कथय किं करवाणि हतोस्मि हा ॥४९॥

मनसि पूर्वमितः कृतवानहं किमपि बाहुजधाम भवेत्पदम् ।
धृतरुषाग्निशिखो गमयेय किं निहतिमाश्वरिखाण्डवमुद्धतः ॥५०॥

विफलमेव बभूव विचारये तदमलं द्विजधाम पुनः श्रये ।
निगमजं महिमानमवेक्षतामवहितं सकलोप्यधुना जनः ॥५१॥

ह्वयति शीघ्रमयं करुणं जनः प्रतिभटाननखण्डनकारिणीम् ।
भवति खण्ड इह प्रलयो द्रुतं खलगणो भविता नियताहतिः ॥५२॥

पदयुगाय जनित्रि समर्प्यते तव ममाखिलमेतदहतं तपः ।
विदलतु प्रसभं सरुचिर्हरिः सितशरीरगजं विगलद्धृदयम् ॥५३॥

भरतदेशशिशुं महिषार्दिनि त्वरितमङ्कगतं कुरु चण्डिके ।
तडिदिवेत्य सशूलहतीश्वरे यमगृहानहिताहिततिं नय ॥५४॥

कलितकाय शुभे निगमागम प्रसविनीश्वरि पूर्णपुरातने ।
असुरदानवसङ्घविनाशकर्यमरमानवसंहतिपालिके ॥५५॥

जय गदादिधरे जनि वैष्णवि जय भवानि सशूलकरीश्वरे ।
अखिलसंसृतिचेतनताचये वितरतीश्वरि चेतनताचयम् ॥५६॥

त्वमसि तापभरोनुकलेवरमयि जने प्रतिकण्ठगिरा तथा ।
हृदयमस्यसवश्च भवाधिपे शुभपरासि सुरासुरयोः समम् ॥५७॥

सुतहिताय लयोपि कृतस्त्वया किमुत सृष्टिरथो अवनं जने ।
तव शुभे महिमानमवेक्ष्य को न पुरतस्तव भक्तिनतो भवेत् ॥५८॥

आसितुं न करुणातरङ्गितप्रेक्षिता निमिषमप्यपारयत् ।
आगता युगलसम्मुखे सती वर्षणोत्कमकरोन्मुदम्बुदम् ॥८९॥

युग्मेविशद्विशदमुत्तममाशु तेजो
हर्षस्य लोचनपथं न जगाम सीमा ।
दिव्येन दुन्दुभिरवेण नभः पुपूरे
पुष्पोत्करेण धरणी च गतो विषादः ॥९०॥

• • •

## सर्गस्तृतीयः

स्वसा जाता स्वसा जाता मम कीदृक् प्रियप्रिया ।
एहि पश्य त्वमप्यत्र सर्वभिन्नेयमस्त्यहो ॥१॥

स्मरसि प्रेक्षितां रम्यां भवानीं तां भवालये ।
तादृगेव स्फुरद्रूपा राज्ञीयं भविता द्रुतम् ॥२॥

त्वामप्यनुहरत्येषा लघ्वी पाञ्चालिकासमा ।
ईदृङ् नो सुन्दरी तेजओजोयुक्ता मयेक्षिता ॥३॥

रौदित्येषा न हिं क्वापि हसतीव सदा पटुः ।
वीक्ष्यैवातितरां मेस्याः स्पृहयत्यस्य दृग्द्वयम् ॥४॥

वर्णयामि कथं नेत्रे इन्दीवरतुले वरे ।
न नेमे तु तथा तुच्छे दृप्ताः पद्माकरा यतः ॥५॥

नावदो जानि पङ्केजादत्रत्यादतिशायिमम् ।
नारवाहन उद्याने क्रीयते येन सन्मनः ॥६॥

एतन्नयनकल्पं तद्यदि स्याच्चिन्तयाम्यहम् ।
न वदेयं त्वमेवास्य वदायात्सदृशं कुतः ॥७॥

प्रातःकाले जनन्यत्र योसावायाति खञ्जनः ।
शोभां तल्लोचने अङ्क्त एतस्या नेत्रसन्निभाम् ॥८॥

चाञ्चल्यं नीतयोरक्ष्णोर्मञ्जिम्नः सीम लुप्यति ।
बालाजिमृगपोतस्य तदा योग्योपमाप्यते ॥९॥

सर्वेषां नेत्रयुग्मं तच्छैतल्याय दृशोः प्रसु ।
तदा किमङ्ग धत्ते तद् यदा लोचनरञ्जनम् ॥१०॥

चित्रकर्मा सुकर्माख्य आलेख्यस्थे इवाक्षिणी ।
आनयत्क्षीरकान्ताभे पत्र आसज्य मञ्जुलम् ॥११॥

भ्राता रावौश्चलच्छन्नो यदा धयति ते स्तनम् ।
तदा विशति नेत्रे ते या दीप्तिः सहस्रोज्ज्वला ॥१२॥

सैवास्या नेत्रयोरस्त्र दीप्तिर्मञ्जुलमञ्जुला ।
किं नैनां प्रत्यनल्पं तद् वत्तिमानं दधात्यहो ॥१३॥

मन्ये सान्द्रतरां गृह् णन् सुधाकरसुधां विधिः ।
अस्या आननसृष्टौ तां विससर्ज समां सुधीः ॥१४॥

चुलुकच्युतविन्दूवाली यासीत् सैवर्क्षसञ्चयः ।
गर्त एव मृगाङ्कस्थः सोऽङ्कनाम्ना प्रकीर्त्यते ॥१५॥

पारदश्यु त काचोयं देवतातायने शशी ।
स्फोटयन्तः शुभां द्रष्टुं तमङ्कं चक्रिरेमराः ॥१६॥

आननं भाति सोमाभं सोमश्चाननसन्निभः ।
उपमानं भवेद् युक्तं किमित्यालोचयेन्निशम् ॥१७॥

इतायामेव शर्वर्यां सुरा आत्तेन्दुदीपकाः ।
अस्या नीराजने लग्ना भवन्तीति न संशयः ॥१८॥

एतावन्ति दिनानीन्दुर्यद् दृष्टो नभसि प्रसु ।
अभ्यासायाभवत्तत् सन्देहावसरोत्र नो ॥१९॥

एकोनत्रिंशतं दीपान् कृत्वामायामुतामराः ।
अस्या नीराजनां नित्यं कुर्वते नव्यतायुताम् ॥२०॥

नूत्नमाप्नोति सम्मानमस्या नित्यं नवं मुखम् ।
नित्यनूत्नं हि लोकेत्र नितरामभिनन्द्यते ॥२१॥

रविकान्तो मणिर्यस्तु पूजागेहाग्र उच्चकैः ।
तस्मिन् भा वर्त्तते तावद् यावत्तिष्ठति भास्करः ॥२२॥

चन्द्रकान्तश्च तातस्य यश्छत्रे लम्बते सिते ।
धत्ते तद्विमतां तावद् यावच्चन्द्रश्चकास्ति खे ॥२३॥

पश्यैत्यास्य परं यामेर्वक्त्रे भाव्यभिचारिणी ।
नित्यं वमति तेजो यन् नित्यं भाति सुशीतलम् ॥२४॥

निरपेक्षा विभा यस्य स्नेहे वर्षति योऽमृतम् ।
तेजस्विनि पराप्ते यत्तेजस्वित्वमसंशयम् ॥२५॥

मणिना तेन केनापि ध्रुवं कृत्वा स्वसुर्मुखम् ।
विधिरस्ति सतुष्ट्यात्मा दर्शं दर्शं तनुं पराम् ॥२६॥

मुखं मायामयं यद्वा येन रूपान्तरान्वितम् ।
यत्तेजोमयमीक्षन्त एकेन्ये शिशिरं परम् ॥२७॥

शिरो भाति यथा तूर्णां सङ्घीभूयालिनः स्थिताः ।
कज्जलस्य च्छलेनैको ललाटे तेभ्य आगतः ॥२८॥

चन्द्रो वेत्यम्बुजं वेति वेत्तुकामाथवाननम् ।
स्थेमानं दधती शीर्षदुर्गेल्याल्यहिनोच्चरम् ॥२९॥

वेद्मि नो सप्रयत्नोपि कज्जलं वक्त्रभूषणम् ।
कज्जलाभूषणं वक्त्रं यद्वोभे भूष्यभूषणे ॥३०॥

रत्नपट्टिकया तुल्यं भालं भ्रूर्धनुराकृतिः ।
कपोलौ स्वर्णपत्राभौ कम्रौ मन्थजकोमलौ ॥३१॥

हारिणावरुणावोष्ठौ बिम्बपल्लवसञ्चयौ ।
हासा भान्त्यत्र शम्पाया हिमस्योन्मेषणैः समाः ॥३२॥

यादृक्सरसिजेतादृगेव गन्धो मुखे स्वसुः ।
नासिका सुन्दरी कीदृक्कीरचञ्चूपमां गता ॥३३॥

कले शब्दे मुखाद् यामेर्निर्गतेमृतमाप्यते ।
सिच्यते येन मुक्तात्मा हृष्टः पृथ्व्याः कणः कणः ॥३४॥

पातुं किं तं सुधासारमाकुलत्वं दधात्यसौ ।
नासिकाशुकचञ्च्वग्रं वक्त्रे रत्यधिकं स्वसुः ॥३५॥

ग्रीवा कम्बुनिभा स्कन्धे मुखदर्शनसप्रभे ।
लसतोऽङ्गुलशाखाभिर्वल्लरीसन्निभौ भुजौ ॥३६॥

अम्ब वक्षस्तथा चित्तमावर्जयति सोदरम् ।
भात्येषा स्वर्णमञ्जूषा सन्मनोरथहीरका ॥३७॥

या रम्भा स्वर्गलोकेऽपि सुन्दरी सकलोत्तमा ।
सापि दृष्ट्वा स्वसारं मे ह्रियं गच्छेदिति ध्रुवम् ॥३८॥

राजन्ते चरणौ पाणी पल्लवैः पङ्कजैः समाः ।
वनश्रीरिव सम्प्राप्ता प्राप्तकाला यथाधुना ॥३९॥

यावत्सार्धं मया पश्येर्न तावत्तथ्यतामियाः ।
यत्पश्येत्पूर्णतो नो दृक् तद्वाणी वर्णयेत्कथम् ॥४०॥

वाणी लोचनयोः स्याच्चेद् वाण्या लोचनयुक्तथा ।
तदा वर्णयितुं किञ्चित् पारयेत्कश्चनानुजाम् ॥४१॥

यथास्वादं विना द्राक्षामाधुरीं न वदेज्जनः ।
यथा स्पर्शं विना कौशश्लक्ष्णतां न लभेत सः ॥४२॥

जानीयान्न तथादृष्ट्वा सौन्दर्यं मेनुजाचितम् ।
मातरागच्छ पश्यैनां या चित्तस्याप्यगोचरः ॥४३॥

महिषहृदयभेत्री शान्तिदा सास्ति दुर्गा
नवविहसनदीप्ता कान्तिदा सास्ति लक्ष्मीः ।
क्षितिधरपतिपुत्री सौख्यदा सास्त्यपर्णा
त्रिभुवननिहिता सा भाति सर्वा समृद्धिः ॥४४॥

पन्तवंशावतंसेन नानाजिना पेशवासूनुनोक्त्वेति निर्बन्धतः ।
स्वाङ्घ्रिणा ताडयित्वा मुहुर्मेदिनीं प्रोक्तमेह्येहि मातर्विलम्बेन किम् ॥४५॥

प्रसूः सुतस्य सस्पृहं निपीय काव्यचातुरीम् ।
इरात्र जन्म लेभ इत्यचिन्तयत्समं मुदा ॥४६॥

मोरोर्विप्रस्य कन्यामेद्
द्रष्टुं सश्रद्धमालिभिः ।
दृशोः सफलतां मेने
ताभ्यां दत्त्वास्रमौक्तिकम् ॥४७॥

• • •

## सर्गश्चतुर्थः

प्राणरामवसुभूमितमैशं हायनं व्यलसदुत्तमकान्ति ।
मास आयत शशिक्षितिसङ्ख्य ऊर्नविंशतितमं दिनमाप ॥१॥

चन्द्र आर्जयत यां न हि कीर्तिं स्वाभिधाविहितवत्सरसञ्ज्ञः ।
तेन सेन्दुनिधिसिद्धिकुनाम्ना हायनेन मिलिता स्वयमेव ॥२॥

दीपपर्व दिनपूर्वमुपेतं क्षिप्रकारि मनसा समवृत्ति ।
रेजिरेलमजिरेजिर आशु दीपकावलय आत्तमहाभाः ॥३॥

कन्यकास्यविधुदीपकताराः श्यामयापि समभावि च गौर्या ।
द्राक् पलायितमुदीर्णभयेन तस्करेण भयविह्वलचित्तम् ॥४॥

तामसी रजनिराप सुभाग्या सात्त्विकस्य खनितां गुणराशेः ।
अम्बराद् धरणिराप्य वरालीं धन्यतां व्रणधरापि जगाम ॥५॥

तत्र भाग्यरहिताहनि काशीं हन्त साप सुचिरात्सुखदर्शम् ।
केवलं निधिमवाप्य न तं किं प्राप सा सुकृतिनी निधिलक्षम् ॥६॥

धूर्जटेः शिवनिधेरधिवासः स्वर्गलोकसरितः प्रतिवासः ।
आर्पयन्त न कदाचन तस्यै यं प्रवास उदथं सुगतस्य ॥७॥

हन्त सम्प्रति विनाप्यभिलाषं यत्नतश्च निरपेक्षमथाहो ।
सोभवत्करगतः सुविभूतिः स्वप्न आप्त इव कश्चन जाड्यम् ॥८॥

भारतं पुनरभूत्सफलार्थं भारतं गलितशोषणदैन्यम् ।
वासरेण सह तेन शुभेन नव्यभावमदधीत समस्तम् ॥९॥

आशु वत्सिमरसेन निषिक्तः सोङ्करो विववृधे प्रणयस्य ।
अङ्ककैर्विलसितोभवदिद्धैर्योग्यतां फलभरस्य वितेने ॥१०॥

सा कदाचिदवपृष्ठशयाभूदम्बराटनपरेव कुमारी ।
सौम्यतापिशुनयद्वदनस्था वर्त्तते मयि रहस्यसमूहः ॥११॥

राजिता शयकुशेशयमुष्टिः कोमलत्वकठिनत्वविशिष्टा ।
सज्जनस्य हृदये लसितानां सम्पदां निधिरिवैदतिशोभाम् ॥१२॥

तत्र लोचनयुगं गतमादावत्र चार्द्धनिमिषेण निवृत्तम् ।
विस्मिताविव परं पथिकौ द्वौ वीक्ष्य वस्तु समसेव विभिन्नम् ॥१३॥

रक्तभे विलसति स्म कपोले चुम्बनस्य जननेरमला भा ।
पाटले सुमनसि द्युतिरम्ये कान्तिमानिव बभौ मकरन्दः ॥१४॥

औचितीमवयवोनुदधाव सर्व आयत परस्परशोभाम् ।
वालिकासुषमतामतिभव्यां विश्वसृट् स्वयमिवासृजदेताम् ॥१५॥

कान्तिवारिनिधिमौक्तिकमेकं सा बभौ रुचिररूपरसाढ्या ।
आजगाम कृतमुद्भवकोटेः सङ्गतं परिणतं सुकृतानाम् ॥१६॥

दर्शनप्रसितनेत्रसरोजा आगमञ्जनगणाः शतसङ्ख्याः ।
क्वासयामि कमिति प्रथितार्त्तिं स्वागताय विममर्श नियुक्तः ॥१७॥

उद्यतानि नयनानि जनानामुत्सुकत्वकलनेन विलेसुः ।
अर्चनार्थमिव दीपकपङ्क्तिर्वालिकास्यकमलस्य विरेजे ॥१८॥

आगतान्युत सुमानि रमाणि देवतोपरि समर्पितसर्वम् ।
अर्चनीयजनहेतुनियुक्तान्यात्महर्षविहिते श्रमवन्ति ॥१९॥

हर्षणाश्रुविमलान्ययतन्त दर्शनाय नयनानि नराणाम् ।
अर्चनार्थमवगाढशरीरा भक्तिभावविलिता इव लोकाः ॥२०॥

वत्सलत्वसुखभक्तिभराणामद्वयं मिलनमेतदराजीत् ।
स्वप्नदृश्यमपि यन्न विदध्यात्कल्पनापि न च कदाचन लोके ॥२१॥

दिव्यदेहभृतमार्चयदेनां श्रद्धया प्रकृतिरप्यतिहृष्टा ।
उत्सुकोन्मिषितपुष्पदृगासीद्दर्शनव्रतपरा सुतरां सा ॥२२॥

कम्पितावनिरुहावलिरुत्का क्वाप्यभूद्व्यजनवीजनलग्ना ।
रोपितप्रसवपल्लवगन्धा क्वाप्यभूद् हृदयरञ्जनमग्ना ॥२३॥

पुष्पभारविलसन्निजदेहा क्वाप्यराजदभिनन्दनयुक्ता ।
पक्षिकारितकलस्वरसङ्घा क्वाप्यवादयत वाद्यविशेषान् ॥२४॥

धान्यकूटमददात्सकलेभ्यः सूचितस्वहृदयाहितहर्षा ।
धारिताभिनवघाससमूहा रोमहर्षणमदर्शयदङ्गे ॥२५॥

वर्धिताम्बुनिधिवारिविसारा रत्नदाननिरतत्वमवादीत् ।
आत्तचण्डकरशीतलरश्मिर्दीपचालनमथाकुरुतालम् ॥२६॥

ज्ञानवत्त्वमुदियाय स मोरौस्तत्कलत्रमभवद् धृतिमत्त्वम् ।
पुण्यमत्तनुमती जनुमत्त्वं बालिकालभत सिद्धिरुदारा ॥२७॥

कल्पते स्म न विलोभयितुं यं पेशवापदमपि प्रथितं तत् ।
धीरताजितजगत्त्रय आसीद्धर्षनिर्भरमना हि चिमाः सः ॥२८॥

आत्मजात्मजसुखेन स वाजी त्विड्धरो यदपि तृप्तमराजीत् ।
प्राप्य तां तदपि मङ्क्षु ममज्ज वत्सिमादरविशेषसमुद्रे ॥२९॥

सोनुजैर्नृपसुतः सह नाना यत्र सौख्यरस आप्लवते स्म ।
नोपमानमलभे क्वचनाहं तस्य नास्ति वचसां विषयः सः ॥३०॥

शुक्लपक्षशशलाञ्छनलेखातुल्यरुग् विववृधे परशोभा ।
उत्तरोत्तरमनल्पजवेन कामनीयममितं वयसोदैत् ॥३१॥

आदिमेन वदने रदनेन गाढभास सुखसार उदीर्णः ।
तेन मातृपितृमानस आशाङ्कुरसन्निभरुचा समुदीतम् ॥३२॥

आप नामकरणाह उदारः सर्व एव मुदितो जन एत्य ।
कीदृशी नु रुचिरस्ति कुमार्या इत्यवेतुमचिनोद् बहु वस्तु ॥३३॥

सा कृपाणमथ पुस्तमधारीन्मञ्जुलां रुचिमदर्शयत स्वाम् ।
हर्षणेन चरणेषु जनानां नृत्यमेकमविशत्सहसैव ॥३४॥

विद्यते सहितमत्र भवान्या शारदेति जनता कथयन्ती ।
हर्षणाम्बुनिधिमध्यनिमग्ना विस्मृतिं गतवती क्षणमेकम् ॥३५॥

सा मनूरिति बभूव ललाम सद्म सद्म मनुमन्वितिपूर्णम् ।
आधिमुक्तिरलसत्प्रतिचित्तं व्याधिमुक्तिरलसत्प्रतिदेहम् ॥३६॥

उद्दधार करपल्लवयुग्मं नामिताङ्गुलियुगं शितिनेत्री ।
आजुहाव जननीं रुचियुक्तं सा यदैव गतमाशु वहन्ती ॥३७॥

हर्षणाम्बुधिरुदैद् धृतवेलावृद्धि मक्षिमविसार उदग्रः ।
तं जना गृहगता अवगाढा नूत्नतां चययितुं शतवारम् ॥३८॥

खेलनोपकरणानि सहेलं मानसान्निपतितानि यदा सा ।
प्राक्षिपद् हठभरेण कुमारी प्राप्य मन्दिर जनोदित तस्यै ॥३९॥

आनयद् रमतराणि पराणि क्रीडनोपकरणानि तदाम्बा ।
रोषणेपि सकला धृतवन्तो हर्षणं गृहजना इति चित्रम् ॥४०॥

वत्सलेन हृदयेन स मोरोरङ्गुलिं निहितवान् वदनेस्याः ।
आदिदेव युवनाश्वतनूजं पाययन्निव पयः सुरराजः ॥४१॥

रोदनं क्षितिहतिश्च पदाभ्यां शासनं च द्विजराजकुमार्याः ।
निग्रहश्च वचसामवरोधोनुग्रहश्च शुशुभे मृदुहासः ॥४२॥

सा क्रमेण मृगपोतसमाना जानुयुग्मचलनेन विरेजे ।
कृष्यते स्म धृतचुम्बनशब्दा व्यस्मरत्किमपि नव्यमवेक्ष्य ॥४३॥

क्रीडमाप्य जननेरनु तरसा बालिका प्रसवितारमधावत् ।
आगता पुनरपि प्रसवित्रीं दिव्यतामुपजहार सुवक्त्रा ॥४४॥

गद्गदध्वनिभरं वदितुं सा मातरारभत तात तथैव ।
मन्दिरे बहिरथोल्लसितस्य जागरं गतवती नवला भा ॥४५॥

अङ्गुलिं जनिरदाद्दशनार्थमानने दशनकोटिभिरस्याः ।
ज्ञातुमन्यत इता न शुभेयं स्तन्यपानविधिमेतमतुल्यम् ॥४६॥

दर्शनेन बहुधाप स नानास्ततस्वसुर्धृतमहोत्कटहर्षः ।
दूरतः स्थितिमहो सहतेत्र किं कदाचिदपि बालिमसीमा ॥४७॥

क्रीडनोपकरणानि च लब्ध्वा खड्गकं च वरमग्रजहस्तात् ।
सा जगाद सुरवेण कलेन बालिकैकमभिनन्दनशब्दम् ॥४८॥

तामदोलयत जन्यधिदोलं सस्पृहं मुखविलोकनलग्ना ।
स्वामुतान्तरमनेन मिषेण विस्मृतिं सुनिपुणा नयनाय ॥४९॥

दोलिकां स्म विटपे विरचय्य्य प्रेक्षयत्युदित तुष्टि स गौरौः ।
शैशवं स्वमवलोकयमानस्तत्र शैशव इतं मुमुदे सः ॥५०॥

बालिका विलसति स्म तथा सा सेविकेव नृपजापि यथा स्यात् ।
क्रीडितेन विमलेन तदैव पालिकाभवदहो स्वकुलस्य ॥५१॥

कुट्टिमोपरि विलोक्य चलन्ती बिम्बमास्यनयनाङ्घ्रिकराणाम् ।
आपतत्कमलसंहतिबुद्ध्या तत्र सायतत धर्त्तुमनल्पम् ॥५२॥

छायया हृतमनाः स कदाचित्क्रोडगां बहुमुदा विदधौ ताम् ।
तामथो समलपत्सविनोदं कुर्वती स्वजन इत्यतिभावम् ॥५३॥

ताडयन्त्यतितरां चरणाब्जं भूतलेकथयदाग्रहरूढा ।
आनयोडुसहितं विधुमत्र मालिकां रचयितुं प्रभु वाञ्छा ॥५४॥

सा कदाचिदपि निश्रयणीगा प्राप्तुमुद्यतकराभवदिन्दुम् ।
तत्र वन्ध्ययतना यतनोत्थखेदतोलभत दुःखमतीव ॥५५॥

तामदर्शयदुपेत्य तदाम्बा निष्कुटस्थतडगे विधुबिम्बम् ।
चत्वरान्तरुत भाजन आप्तं पूर्ण आतटमनाविलवाराम् ॥५६॥

स्प्रष्टुमम्बरतलस्य कदाचिद्बालिकाञ्चलमधावदुदग्रा ।
इन्द्रचापमधिगन्तुमना वा पालिका निजकुलस्य पपात ॥५७॥

पुत्रिकेव विचचार द्विजेन्द्रपुत्रिका सकलसद्मनि हृद्या ।
दर्शकेक्षणयुगेन समन्ताच्चुम्बिता समुदिताम्बुभरेण ॥५८॥

पुत्रिका विरहनिर्धनमङ्कप्राघुणीभवतु सर्व इयेष ।
को भवेज्जगति न प्रसितात्मा शैशवस्य चरितानि निरीक्ष्य ॥५९॥

वीक्ष्य भृङ्गमुत चित्रपतङ्गंतं कदाचिदपि सानुववन्ध ।
निष्कुटस्य चपला क्वचनापि वाहनीकृतवती मृगपोतम् ॥६०॥

गाङ्गवार्युपरि राजितवक्त्रा पद्मिनीव हृदयानि जहार ।
क्षेत्रमाप्य बहुशस्यमनोज्ञं श्रीसमा विलसिता कुसुमानाम् ॥६१॥

वाटिका सुमनसां समवाये सूर्यपद्ममिव वक्त्रमवेक्ष्य ।
कौतुकेन हरिणा अपि तस्थुर्निर्निमेषमवलोकयमानाः ॥६२॥

आतपे क्वचिदनातपदृष्टे तत्र तिष्ठति पतत्रिणि नव्ये ।
तस्य चित्ररचनां प्रति वासूर्लालसातिजवनेन दधाव ॥६३॥

अग्रजं स्वलिखितं वत नानां दर्शयिष्य इति गुप्तमधात्तत् ।
दृश्यतामनुकृतिः प्रकृतिश्चेत्याह्वयद्रुचिरवाग्रचनास्वाम् ॥६४॥

कोकिलं मधु विडम्बयति स्म सा कुहूध्वनिभरं विदधाना ।
चञ्चला छलयति स्म जनित्रीं सापवार्य विहितौतुविरावा ॥६५॥

कृष्ण एव कृतवालकलीलो वालिकात्वमधिगन्तुमतीहः ।
लीलया क्षितितले धृतमौरपुत्रिकातनुरवातरदत्र ॥६६॥

धारयन्त्यमलभाभरणानि द्यौसमालसदनुत्तमपत्रा ।
क्वापि चैव सुमनोन्तरभारैर्वाटिकाश्रियमचोरयदेषा ॥६७॥

वीक्ष्य तां प्रमुदितः सकलोपि गानवारिधितलं निममज्ज ।
हास्यराज्यमतिदार्ढ्यमयासीन्नव्यतादिनकरः समुदैच्च ॥६८॥

सा प्रसूः स जनकश्च तदीयौ शङ्करश्च नगरी च तदीया ।
कीदृशं निरुपमां शिशुरूपमाधुरीं समधिगम्य ननन्दुः ॥६९॥

देवकी व्रजभुवा वसुदेवो दम्पती मथुरया सह गोपौ ।
किं तथा मुमुदिरे स यदाभूद्वासवावरज आप्तशरीरः ॥७०॥

वत्सरा युगमिताः सुखनिद्रासन्निभं विगलिता निमिषेण ।
वादनादिकमहो सकलं तल्लोपमैद् युगपदेव मनोज्ञम् ॥७१॥

ईक्षितेन हृदयेन च माता तृष्णया विकलितेन विलुप्ता ।
क्रूरता वत सुतोपयमाशाकुड्मलं दलितवत्यतिघोरम् ॥७२॥

हे जने प्रसु जनित्र्ययि मातः क्वेत्यपृच्छदनिशं रुदनार्त्ता ।
चूर्णयन्त्यह धृतिं वरकान्ती रोदनेन कुलिशेन पितुः सा ॥७३॥

रोदनोपकरणं न भवेत्तद् गोचरो मम दृशोरिति मोरौः ।
नेत्रकोणमभितो जलबिन्दून् धारयन्धृतिशिलादलितान्तः ॥७४॥

वस्तुजातमखिलं स्मृतिहेतोः सञ्चितं पिहितवान् गृहखण्डे ।
बालिकां कथयति स्म प्रसूस्ते वर्त्ततेन्तरुपयाति पलेन ॥७५॥

बालिका गृहितदेहलिका सा तत्र सन्ततमहो उपविष्टा ।
द्वारताडनमभूत्क्षतिरेका क्रन्दनं वत चिरन्तनमित्रम् ॥७६॥

कमपि समयमेषायापयद्दुर्बलाशा नयनसलिलगङ्गास्नातदेहा सदैव ।
अधिवदनमभूत्किं रक्तिमा लेशतोपि तददिनत उदग्रं शोकदः सर्व एव ॥७७॥

अथ सुरपुरमाश्रयच्चिमा अ-
प्यनु वत कानिचिदेव तद्दिनानि ।
असहत न स तां किमप्यमित्रो
धृतिकणिकामपि मर्मकृद् विधाता ॥७८॥

•••

## सर्गः पञ्चमः

गताश्चिमाः किन्तु वथं तथा स्मश्चिन्ता न कार्येति पराप्य लेखम् ।
स पेशवाप्रेषितमाह मोरीर्व्रह्मादिमेष्यामि सुपुत्रि वर्त्तम् ॥१॥

प्रयाव काश्या अयि लालिते द्राक् क्रीडिष्यसि त्वं सह तत्र नाना ।
दक्षा भविष्यस्यधिगत्य रीतिं वाला च रावेण समं सभायाः ॥२॥

संभूय सर्वैः शिशुभिश्च वालैः सा व्यस्मरच्छोककथां कथञ्चित् ।
जीर्णान्यतीतानि समं क्रमेण जाता समस्ता जगती नवीना ॥३॥

पाञ्चालिकास्ताः शनकैर्विजग्मुस्ते कन्दुकाः क्रीडनकानि तानि ।
चन्द्राय वाञ्छा सह तेन खेलास्वप्नाश्च भग्ना मधुरत्वशीलाः ॥४॥

प्रासाद आपच्छिमलत्वमाप्य मन्वाः पदस्पर्शमतीव पुण्यम् ।
कालायसं स्पर्शमणिप्रसक्तं कार्त्तस्वरत्वं लभते यथैव ॥५॥

अश्रूयताये मनु मन्विति द्राक्सर्वत्र तस्मिन् भवने च देशे ।
मिष्टान्नपूर्णाञ्जनतानयत्तामुपायनं पर्णपुटान् सुहृद्याम् ॥६॥

आकारयत्तां क्षितिपः स वाजीरावश्छवीलीति सवत्सिमान्तः ।
प्रेम्णोदरे कोपकषायिता साप्यकूर्दतामुष्य वलेन कन्या ॥७॥

शौर्यं क्रियासङ्गतिमाप्तवद्द्रागौचित्यपूर्णत्वमितो विकासः ।
साभ्यासमारेभ उदात्तचित्ता शस्त्रस्य शास्त्रस्य च कौशलेन ॥८॥

अध्यैष्ट सा भारतनाम काव्यं प्रत्यक्षरं नीतवती स्मृतिं तत् ।
अनुस्मरन्ती च दशामतुल्यां तां भारतीयामपतद्विषादम् ॥९॥

भीमार्जुनादीन् समरोद्यतान् सा स्वप्नस्य मध्ये बहुधा ददर्श ।
सा वीरयोस्तद्भुजयोः प्रकामं प्रपूरयामास महोग्रवीर्यम् ॥१०॥

दुःशासनस्याचरितेषु मुष्टिर्यद्वच्छयैवाङ्गुलिभिर्व्यधायि ।
तस्या मुखेन च्छलितेष्वभावि दुर्योधनस्यातिभयङ्करेण ॥११॥

दुःस्वप्नमालोकत जाग्रती सा क्वाप्यागतात्र द्रुपदस्य पुत्री ।
दुःशासनीयेन करेण कृष्टान् केशान् वहन्ती स्वशयेन सेति ॥१२॥

व्यचिन्तयत् साथ च भारती भूः पाञ्चाल्यहो नान्तरमत्र किञ्चित् ।
दुःशासनक्लेशततौ तदीयेप्यस्त्येव शीर्षे सततं महोग्रा ॥१३॥

शुश्राव सा साभिनिवेशचित्ता शूरोत्तमानां चरितं प्रसिद्धम् ।
दुःखैस्तदीयैरतिदुःखदीर्णा सुखैश्च सौख्याम्बुधिलीनगात्रा ॥१४॥

शिवाजिनः शौर्यरसप्रधानाः कथाः शृणोति स्म नृपस्य रुच्या ।
नित्यं महाराष्ट्रभवान् प्रवीरा सोत्सर्गभावानुररीचकार ॥१५॥

जीजाकृतिः सा चरितं च ताराप्रदर्शितं तन्महिलान्तराणाम् ।
निपीय सा चिन्तितवत्यजस्रं शिष्टं पतत्यद्य ममैव भागे ॥१६॥

साँगाश्च कल्ला जयमल्लफत्तौ चूडावदादिर्भटराजराजिः ।
आदर्शतुल्या हृदयं तदीयं प्रकाशयामासुरुदात्तभाभिः ॥१७॥

श्रीरत्नसिंहस्य हमीरकुम्भौ सर्वस्वमोक्षौ विदितौ न तस्याः ।
गोविन्दमानीय गुरुं स्मृतिं सा वन्द्यां च शक्तिं नवलां बभार ॥१८॥

झाला इवासौ शलभायते स्म हासेन वैदेशिकमुक्तिदीपे ।
आमूलचूडं घनदेशभक्तिरसेन ताना इव मग्नतामैत् ॥१९॥

शरासनं चैव शरं भुशुण्डीं सदा शतघ्नीं गुलिकायुधं च ।
जानन्त्यजानन्त्यथवा प्रवीरा चर्चातिथीकर्तुमभूद् महोत्का ॥२०॥

क्वचिद् झणत्कारमसिप्रसूतं प्रपूरयामास समीर एव ।
क्वचित्सणत्कारमतीववेगाद् व्यसारयत्सा गुलिका विमुच्य ॥२१॥

शक्तिं दधाना स्फुरितां करेण तेजस्विनी शक्तिरिव व्यराजीत् ।
आरुह्य वाहं शमनेपि लज्जां विद्योतयन्ती स्वमसिं व्यतानीत् ॥२२॥

तां दर्शयामास पराप्य नृत्यं सन्मन्त्रमुग्धेन समः सदश्वः ।
अग्रे समुत्थाप्य पदे सलीलं सिंहायते स्म प्रसभं विनीतः ॥२३॥

वैशग्र्यसार्थक्यमदर्शयत्स चौदेशमुत्पत्य लवेन वेगी ।
उत्प्लुत्य चोत्प्लुत्य च दर्शकानां विवर्धयामास मनःप्रहर्षम् ॥२४॥

गत्युत्तमाः सन्ति मनःखगेशौ समीरणस्तत्तनुजश्च तुल्यः ।
तथापि ते धावनमीक्षमाणास्तदीयमापेदिर आशु लज्जाम् ॥२५॥

खगस्य सिंहस्य तुला ततः का मृगस्य चास्मिन् हयराजिराजे ।
स्वं लेखिनीयं क्लमथुं तनोति तत्सेवकस्यापि कथानुबन्धे ॥२६॥

ब्रह्मादिवर्त्तश्च समेत्य काशी मनूकृतैर्भास्करवत्प्रचण्डैः ।
बभूवतुर्वीरभुवाविति द्राक् प्रसिद्धिहर्म्याग्रतलाधिरूढौ ॥२७॥

कथा तु का स्याद् भरतस्य भूम्या यन्मृत्तिकायाः कणिकापि कापि ।
पराक्रमेणास्ति कदाप्यशून्या नोत्सर्गभावप्रवणा कदापि ॥२८॥

मन्वा कृतं व्यूहविधानमेकं दृष्ट्वा सदाभूक्षितिपो विमुग्धः ।
तल्लोचने क्षामविभे अभूतां चमत्कृतिव्याप्तपरप्रकाशे ॥२९॥

वामं करं क्वापि मनूरवामं वल्गां नयन्ती च तथैव खड्गम् ।
इत्थं परीवर्त्य नवीचकार सा सव्यसाचित्वकथां स्फुरन्तीम् ॥३०॥

स वीरवेशो जननीस्वरूपमालेख्यमन्तःफलके लिलेख ।
प्राज्वालयच्चापि कणे कणे स नारीजने जागरणस्य गाथाम् ॥३१॥

इत्थं किशोरी परिवर्द्धमाना प्रौढिं क्रियासु द्रुतमर्जयन्ती ।
माध्वींव शोभोपचितोत्तमत्वा दिने दिने राजितवत्यतुल्यम् ॥३२॥

कदाचिदुद्दामरुचिः सनानारावाटवीमैन्मृगयोत्सुका सा ।
मार्गा अशेषा नगरे बभूवुः सदर्शकालीक्षणतोरणास्ते ॥३३॥

निःशेषतां प्रावृडिता बभूव निष्कर्दमत्वं सरणी च सर्वा ।
जले स्थले दिक्ष्वखिलास्वधावद् रथोतिवेगं शरदोधिपायाः ॥३४॥

समाप्तिमभ्याश्विन आप मासः सयौवनोल्लास ऋतुर्विरेजे ।
भूभूधराणाममलतां प्रपेदे रेजेमलत्वं प्रबलं समस्मिन् ॥३५॥

मलीमसं वारि बभूव पूर्वं यत्प्रावृषेण्यैर्घटनैरतीव ।
प्रसन्नमासीत्तदलं व्यसारीत् प्रसन्नताराज्यमशेषदिक्षु ॥३६॥

शून्यो बभूवाम्बुधरप्रसेवो न शिष्यते स्माम्बुलवोपि तत्र ।
प्रायो जगत्यामियमेव रीतिर् विलुप्यते श्रीर्द्द्रढमास्त यत्र ॥३७॥

रिक्तस्तिरस्कारमुपेयिवान् स विवर्णतायुक्तमितस्ततोगात् ।
नापातयत्कश्चिदनुग्रहार्द्रं विलोचनं तत्र सुदीनरूपे ॥३८॥

को नाम निःस्वस्य धरातलेत्र सहायभावं प्रभवेत्प्रयातुम् ।
इति क्वचित्तुष्टिमयात्कथञ्चिन् नीचैर्गलन्नप्यवधार्य तस्थौ ॥३९॥

जलस्य शोभा नवतामुवाह कुशेशयानां निचयश्चकास ।
विशाल उल्लोच इवास्तृतोभूत् तथा व्यसारीद्रजसां समूहः ॥४०॥

व्योमाथ पाथः पुलिनं सितत्वं घनैरवृष्ट्या सिकताभिरापुः ।
आसन् सिता अब्जचयाः सितिम्ना पृथ्वीतलादम्बरमापुपूरे ॥४१॥

सत्त्वस्य रूपं सुसितं तथासीद् यथाभवन् क्षीणविभा मरालाः ।
तुल्यापवादेन मिलिन्दराजिः स्वगुञ्जितैरत्यभिरामरूपा ॥४२॥

तरङ्गिणीतीरवनोद्भवेन यदा हृते हंसकलेन नेत्रे ।
तथा यदा यत्नशतेन खिन्ने हंसं न ते लब्धवती वराके ॥४३॥

प्रतीतिरेषा विकचा तदाभूत् स्वप्नावनौ सम्प्रति साटतीव ।
अतीव मायाप्रसरोथवा दृग् यत्कारणेन प्रवणांश एव ॥४४॥

तटे बभौ वृक्षततिर्जलस्य शोभाहृतायानतपूर्वकाया ।
तथा जलं धावितवज्जवेन वहत्सहस्रं लहरीकशानाम् ॥४५॥

शाखाग्रभागैश्च विरेजिरे तद् विडम्बयन्तस्तरलैर्द्रुमास्ते ।
स्वयं च वातेरितपूर्वभागाः प्रकोपयन्तोनुकृतिप्रचारैः ॥४६॥

मन्देन वातेन तटे तरूणामुन्मीलिताः पुष्पदृशः सुरम्याः ।
जलं च कम्रैर्जलजातनेत्रैर्बभूव तद्दर्शनसादरात्म ॥४७॥

तत्पक्षयोस्तान्युभयोर्न साकं परस्परीयां ददृशुर्विभूतिम् ।
मञ्जिम्न आसीदभिमानमुच्चैर्नानामयत्कोचिदपि स्वमग्रे ॥४८॥

आसीच्छटारण्यगता विचित्रा हरित्सु रेजे हरितं समासु ।
गुहा गुहा शैलतटे पराप पानीयसम्पत्तिमहीनसत्त्वाम् ॥४९॥

मन्ये गुहाभ्यो जलकैतवेन वनं सयत्नं मधुसञ्चयेभूत् ।
तदा च संसेवनतोनिशं तद् बभूव माध्वेन मदेन मत्तम् ॥५०॥

क्वचिद् विरेजे हरिणः क्वचिच्च हरिर्विभावन्य उदैच्च वन्यः ।
विभिन्नवर्णान्वितचर्महृद्यो विभिन्ननादाहृतचित्तवृत्तिः ॥५१॥

जगर्ज सिंहो न तथा प्रचण्डो महाभयापूरितकाननान्तः ।
यथा तदीयः स गुहाप्रविष्टः प्रतिध्वनिर्भीषणता सदेहा ॥५२॥

वीराष्टवर्षा प्रबला किशोरी मनूरधिष्ठाय हयं दृढात्मा ।
तं धावितुं शीघ्रममोचयत्सा समुद्यतान्तर्मृगयाक्रियार्थम् ॥५३॥

बुभोज यो विप्रवरस्य सिंह उस्रां सदुग्धां युवतीं सुहिंस्रः ।
तं कुन्तमात्रेण यमस्य गेहं नयामि दन्तांश्च भनज्मि तस्य ॥५४॥

यद्दर्शनेनैव मनाक् शिशिक्षे बालागुरोर्मल्लनिकेतनेहम् ।
द्राग्दर्शयिष्यामि तमद्य पापं तत्कार्यरूपान्तरितं विधाय ॥५५॥

क्रीडां महासाहससाधनीयामिमां विधायैकमसिं नवीनम् ।
लप्स्ये पितृव्यात्क्षितिपाच्च बालागुरोः प्रहृष्टाच्छतसाधुवादीम् ॥५६॥

विचिन्तयन्तीं कमनैवमेव महाशमासेचनकास्यशोभा ।
यावच्चचालानुगतः स नाना अग्रं गतः प्रेरितसैन्धवेन्द्रः ॥५७॥

उवाच पश्यातिशये मनु त्वामद्याशुगत्या हयचालनेन ।
शक्नोषि चेदग्रतरं प्रयाहि कस्मादहो त्वं कुरुषे विलम्बम् ॥५८॥

गृहेन्यथा मे जलमानयस्व दासीव शीघ्रं न सहे विलम्बम् ।
न्यक्कृत्य यद्वा वचनं स्वकीयमूरीकुरुष्वापयशःप्रकाण्डम् ॥५९॥

इत्थं निशम्योक्तवती न गर्व एतादृशस्ते भवतीति विद्धि ।
एषोग्रयायी मम सैन्धवोस्ति पश्चाथ मुक्तो मम मार्गणोयम् ॥६०॥

इति प्रदर्श्य प्रबलं किशोरी तेजोधरीकृत्य नृपाङ्गजं तम् ।
जगाद सत्यां मयि कोपि नारीं कच्चिद् विजेतुं प्रभवेन्नरोत्र ॥६१॥

स्वसैन्धवं पृष्ठत ईक्षमाणो नानास्मयो विस्मयभावमाप ।
तस्मिन् गतेमन्यत मानभङ्गं व्रणं वचः सैन्धवमाहितं तत् ॥६२॥

स्युर्वा न वामी असवो ममेति वीरव्रतात्मा निजगाद नानाः ।
समीरयंश्चापि महारयं तं हयं गतिं शिक्षितवान् गतिं सः ॥६३॥

कथं शतेनापि परंतु मन्वा अयेत सोग्रे यतनस्य नानाः ।
अजेयताभ्यासभवा न तत्र विकासमापन्नरनाथपुत्रे ॥६४॥

अत्रान्तरेसौ तुरगस्तु मध्ये मध्ये विरामप्रकृतिः कुरीति ।
व्यावर्त्तनं पृष्ठपदद्वयस्य चकार ह्रे षाशतमाततान ॥६५॥

जडीबभूवेदमसौ विलोक्य व्योम्न्यग्रहीनेपि पवेर्निपातम् ।
अप्रग्रहोभूत्कर आशु तेन तं केसरे सैन्धवमग्रहीत्सः ॥६६॥

हस्ताच् च्युतः सोपि तदा पपात क्षोण्यामकस्माच्च पुनर्दधाव ।
शालां गतः स्वां स तु सादिराजो न्यपप्तदुर्व्यामधरोत्तरं द्राक् ॥६७॥

ललाटदेशे प्रविवेश दारुखण्डः प्रलम्बो रसनिर्धनोलम् ।
स्थित्वा च तत्रैव मुहूर्त्तमेकं रक्तेन सार्धं बहिराजगाम ॥६८॥

आक्रन्दतायेमनु रक्ष रक्ष निवृत्य चालोकय जामि तावत् ।
हा हा हतोस्मि प्रसभं वराक आगच्छ नैष श्वसिमि क्षणेन ॥६९॥

आकृष्य रश्मिं जयिनी किशोरी तूर्णं स्वमश्वं नियतीचकार ।
निमेषयुग्मेन च केवलेन निवर्त्तयामास तमिङ्गितेन ॥७०॥

यावद् वचोभ्यो विरराम नानास्तावन्मनूः सा निकषा तमापत् ।
जगाद जीविष्यसि किं न बन्धो च्युतोसि किं साहसिकाद्विचारात् ॥७१॥

इत्यालपन्ती सह सान्त्ववाण्या क्रोडीचकाराग्रजनं जवेन ।
कृत्वा तमुत्तानशयप्रशान्तं तत्स्यन्दमानं रुधिरं रुरोध ॥७२॥

धावन्नुपायन्निमिषेण रावस्तौ द्रावनूच्छ्लजलवारिनेत्रः ।
आदेशमादाय मनूप्रदत्तं शीर्षेण वाः सारसमानिनाय ॥७३॥

पुनः पुनः कर्पटमार्द्रयित्वा सिषिञ्च गम्भीरममुष्य सेर्मम् ।
आदाय पर्णं तदुदुम्बरस्य प्रपूरयामास रसेन तस्य ॥७४॥

मुक्त्वा ममत्वं वसनोत्तमस्य छित्वाञ्चलं स्वस्य दयावती सा ।
तत्पट्टिकां काञ्चन संविधाय बबन्ध मन्दं शिर उन्नमय्य ॥७५॥

नारीजने विक्लवनिर्धनत्वं विलोकयन्त्यो वनदेवतास्तत् ।
कम्रावलैषा सबलास्त्यहो इत्यूचुर्महाविस्मयरुद्धवृत्ति ॥७६॥

नानाजिनं चोक्तवती पुनः सा स्वस्थोसि तावत्पुनराशु तिष्ठ ।
दृष्ट्वा क्षतं च क्षतजं च नेत्रे नो मुद्रयायस्व हयं ममेति ॥७७॥

मृतोस्मि हा हेति वचो निशम्य नानाः पुनः सा न बभूव तूष्णीम् ।
जगाद बन्धो न हि पेशवाख्यं पदं पुनः स्थापयितासि नैवम् ॥७८॥

कृत्वार्त्तनादं नृपजेत्थमेव किं युद्ध्यसे म्लेच्छसमूहनेन ।
आहन्यमानश्च किमित्थमेव व्यावर्त्तसे साहसतो मुखं स्वम् ॥७९॥

विन्यासमादाय नरीजनानामन्तःपुरं शोभयसे न केन ।
ईदृग्जडं शोणितमाप्य देहे कौक्षेयकं स्प्रष्टुमहो महौकः ॥८०॥

अभ्यासहेतोः प्रथमं यदाहमधावयं सैन्धवमद्रिदेशे ।
तृणीकृतेर्मा कतिधा तदा तन्नितम्ब आपातयमापदि स्वम् ॥८१॥

किं त्वादृशं किं तु रुरोद सार्धं दीनं वचः किं वदने चकार ।
स्त्रैणत्वमाप्ता स्त्र्यपि किं मनागप्यूरीचकाराग्रज कातरत्वम् ॥८२॥

सङ्ग्रामसिंहोनुकरिष्यते नो तद्विस्मृतं किं वत तस्य चित्रम् ।
उद्बध्य कुड्येर्चनमन्दिरस्य तत्किं त्वयाडम्बर एव तेने ॥८३॥

अशीतिरिद्धेन नृपेण तेन क्षतानि सोढानि सहासमेव ।
वक्त्रार्कभिन्नां दधता निजाङ्गै रक्तच्छटारक्तकुशेशयालीम् ॥८४॥

उत्तिष्ठ भाविन् भरतक्षितेर्हे नेतर्विनेतः कृपणत्वमुक्तः ।
उत्तिष्ठ तन्द्रां परिहृत्य वीर पन्तान्वयाम्भोजसहस्ररश्मे ॥८५॥

उत्तिष्ठ दासत्वमपी मनीषिन् घृणाप्रसूर्लोपमुपैतु देशात् ।
उत्तिष्ठ सम्प्रत्ययि पारवश्यबन्धोस्तु भग्नः सतडत्कृति द्राक् ॥८६॥

उत्तिष्ठ हस्तेन तवैव देशो नवं भवेन्निर्मित एव नूनम् ।
उत्तिष्ठ हे वीरमणे तवैवैदाकारणैर्जागरणं नवीनम् ॥८७॥

एवं वचः शृण्वत एव नानाः कलेवरे काचन शक्तिरायात् ।
अशक्तिरप्युत्थितवाञ्जवेन सोत्साहमाशूपचितात्मधामा ॥८८॥

पुनः किशोरी निजगाद किं त्वं ताताधितिष्ठेरधुनाश्वपृष्ठम् ।
किमात्थ नेति व्रज नो निराशभावं न युक्तं त्वयि विह्वलत्वम् ॥८९॥

सन्धारयिष्याम्यहमेव तत् त्वां निषीद वाहस्य ममैव पृष्ठे ।
तथा करिष्यामि यथा सुखं त्वं प्रासादप्रासादयसेविलस्वम् ॥९०॥

परं प्रसन्नो भव सस्मितोयि नैराश्यमेघावलिरैद्विनाशम् ।
भवेद्द्रुतं क्लैव्यकुहूः प्रभाता लभेत मृत्युं कुविचारमाला ॥९१॥

निपीय नाना वचनं भगिन्या भ्रातुर्ददर्शाननपुण्डरीकम् ।
स्मितस्य पूर्णो रदनच्छदे खे विद्युद्विलासेन समानमिद्धम् ॥९२॥

आरोहयत्तं स्वतुरङ्गमेव पृष्ठे गृहीत्वाहतशीर्षमेषा ।
आरोहति स्म स्वयमप्यभीता नानाभुजं रश्मिमथो वहन्ती ॥९३॥

रावो दधत्पूर्णतया भगिन्यां विश्वासमासीत्स विमुक्तचिन्तः ।
पश्यंश्च दृष्ट्येतनिमेषया तद् वैचित्र्यमालेख्यसमः स्थिरात्मा ॥९४॥

निरूपयन्तस्तु जना द्रवन्त इतस्ततो दृष्टिपथं प्रयाताः।
द्वौ सादिनौ वीक्ष्य कृतार्थभावं गता अतुल्यं मुदितं वितेनुः ॥९५॥

परस्परांस्ते जगदुः कुमारस्तुरङ्गमोऽस्मान् व्यदधात्सभीतीन्।
वयं त्वमन्यामहि सिंहरूपं महाभयं भीतिपरायणाः स्मः ॥९६॥

मनूस्तु नैराश्यमहान्धकार आसीन्महाशाकिरणोऽतिभास्वान्।
दुर्गाकृतिः सैव सदास्मदीयशङ्कावलीवारणपण्डिता वै ॥९७॥

आगत्य तेषां सविधे किशोरी जगाद कस्मादवलोकये वः।
किमस्ति कार्यं भ्रमणीविलास उत स्थ यूयं मृगयैककृत्याः ॥९८॥

श्रुत्वा तदीयं वचनं जनानामाश्चर्यतो विस्तृतिमाप चक्षुः।
विचिन्ततां वीरकृतिः कुमारी भयस्य नामापि न वेत्ति नूनम् ॥९९॥

धिग्धिग्मदीयं हृदयं सभीतमित्यप्रकाशं कथयाम्बभूवुः।
भेष्यामि नैवेति विचार्य सर्वे सन्तोषतस्ते मुमुदुर्नितान्तम् ॥१००॥

ऊचुश्च भद्रे नृपदारकं नः प्रदेहि नेष्याम इतो निकेतम्।
सहामहे सम्प्रति नोह्यमानं त्वया कुमारं सुकुमारगात्रि ॥१०१॥

मनूस्त्ववादीदिह सज्जनेन्द्राः किं मन्यते दुष्करता भवद्भिः।
सुतुच्छमीदृग्घटितं परं तु भवन्त ईदृक्षमहो भयार्त्ताः ॥१०२॥

रक्तं शरीरे सकले विलोक्य चकम्पिरे ते सहसा मनुष्याः।
समर्थताभूषिततः परं तु निर्बन्धतः स्तब्धरवा बभूवुः ॥१०३॥

चेलुस्त एतामनु शौर्यमूर्तिं गम्भीरमास्यं सकला वहन्तः।
पुनः पुनस्तीक्ष्णवचः स्मरन्तः पलं प्रसन्नाश्च पलं विषण्णाः ॥१०४॥

चिन्तावलीरेकसहस्रसङ्ख्या भालेन बिभ्राण उदाररूपः।
आसीद् व्यथाभारनतः स भूपो निरीक्षमाणो निपुणं दिशं ताम् ॥१०५॥

मोरौश्च राजान्वयजाः समस्तास्तस्थुर् महाभीतिपराः सहैव।
आन्दोलिता भीषणशङ्कया ते दध्रुर्मुखेनाकुलताममेयाम् ॥१०६॥

अथागतस्येक्षणगोचरत्वं नाना विवर्णं ददृशे मुखं च ।
वस्त्रं च रक्ताक्तमकम्पतोरो मोरोरिलेशस्य सशङ्कितान्नि ॥१०७॥

नानावलम्बाय समाजगाम लोकावलिः किं तु कुमारिका सा ।
विश्रान्तिमैद् भुव्यवतार्य नानां व्यावर्त्तयेत्कः स्थिरबुद्धिमत्र ॥१०८॥

आगत्य सद्यो भिषजां वरिष्ठः शय्यागतं तं च चिकित्सति स्म ।
मनूकृतां तामुपचाररीतिं विलोकयन्नाप चमत्कृतिं सः ॥१०९॥

मनूस्तु गत्वा स्वपितृव्यमाशु तदङ्घ्रिपद्मद्वयसक्तपाणिः ।
पितुः करौ स्निग्धतया करेण वहन्त्यवादीत्खलु चिन्तयित्वा ॥११०॥

चिन्ता तु कीदृश्युरुरस्ति बन्धोरुपेक्षणीयं घटितं यदद्य ।
बभञ्जथुर्हन्त युवां त्वधैर्यसीमानमेवेत्यवलोकयामि ॥१११॥

आश्वस्तचित्तः स उवाच बाजीरावः सुते ख्याहि समस्तमेव ।
कथं महापत्प्रकृता पपात त्वया तु विज्ञायत एव सर्वम् ॥११२॥

अहो अभूत्किं तुरगः पितृव्याभ्युत्पुप्लुवे बन्धुरपातयत्स्वम् ।
खण्डं च काष्ठस्य ललाटदेशं चखान किञ्चिल्लघुकायमेकम् ॥११३॥

तदैव चानन्दकरः प्रसङ्ग उपस्थितो मय्यवलोकयन्त्याम् ।
हयस्तु दुद्राव विरामशून्यं तथा यथा मे वनृतेतिहासः ॥११४॥

तथा पलायिष्यत सैन्धवो मे विसर्जयन् मां धरणीतले चेत् ।
तदान्वधाविष्यमहं तु शीघ्रं पीडां विदूरे क्षतजां निधाय ॥११५॥

श्रुत्वोक्तजातं स्मयते स्म मोरौर्जनेश्वरोसौ हसति स्म मुक्तम् ।
ज्ञात्वा परं त्वङ्गुलिमात्रमीर्ममधीरतामेकपदे प्रयातः ॥११६॥

महानुतापे ज्वलितोनु तान्तस्ततः शिरोधाम्न्युपवेशमाप ।
मोरौश्च शास्त्रीयवचो निशाम्य विबोधयामास सधीरभावम् ॥११७॥

तौ तत्र जातौ विदुरश्च नानाचिन्ताकुलत्वं धृतराष्ट्र आप्तौ ।
किशोरिका तु प्रययौ निकेतं तद्विक्लवत्वेन सविस्मितत्वा ॥११८॥

चिचिन्त सा किं बत पेशवाख्यो जनोपि सङ्गच्छति कातरत्वम्।
उद्धारसौकर्य्यमथैवमेव किं भारतं वर्षमवाप्नुयाद् हा ॥११९॥

नानाजिनाप्यद्य विलप्यते हा भ्रात्रा त्वनेनार्भकतुल्यमेव।
न ज्ञायते हन्त भविष्यते किं भव्येन नो भारतनीवृतेति ॥१२०॥

अत्रान्तरे तत्र जगाम मोरौरुवाच चाकर्णय भोः सुपुत्रि।
हन्ताट्टहासं कुरुषे यदा स्वः शय्यागतो वर्त्तत एष धुन्धूः ॥१२१॥

पश्यास्त्यहो बालिशतापि सीमाशून्या न बाल्यस्य कदापि पुत्रि।
न लाञ्छनं यातु सदाशयत्वे यथा तथा ते करणीयमत्र ॥१२२॥

उवाच सा तात जगाद किं न त्वमेव हासः सततं वरीयान्।
कथं तदा त्वं कुरुषेत्र चर्चां तां या विहन्यात् परमं तमेव ॥१२३॥

जानामि जीवेत्कथमत्र कुन्तीदुर्गादिभिस्तुल्यमदभ्रमाना।
अहं त्वशिक्षेत्र सदैव हासमशून्यमन्ये परमः प्रमादः ॥१२४॥

भीमो यदास्यत्समरस्य मध्ये दूरं गुरुस्यन्दनमात्तरोषः।
तदाकरोदण्वपि किं व्रणानां चिन्तां त्वमेवेरय हे पितर्माम् १२५॥

यदा तथा मध्यमपाण्डवोभूद् युद्धे रतो भीषण एक एव।
किं धारयामास तदा स तात विलापमेव व्रतमेकमात्रम् ॥१२६॥

अभीक्ष्णमुग्राः समराङ्गणे तु शतं प्रहारा निपतन्तु नाम।
कुर्वन्ति सर्वे शुभचिन्तकास्तु सहासतालस्वनमेव नित्यम्। १२७॥

वीरस्य ते हासमयाननेन कुर्वन्तु नो यद्यभिनन्दनं तत्।
कथं ततः स्थापयितुं क्षमास्ते भवेयुरुत्सर्गपरप्रवृत्तिम् ॥१२८॥

एवं त्विदं जीवनमेव सर्वं हसेम किं तात सदैव नात्र।
अन्यत्तु हासाद् वितरत्यहो किं किञ्चिद् धरा सान्त्वनमस्मदीया ॥१२९॥

नताननास्तापभरेण सर्वे केचित्तु कुर्वन्त्यपि रोदनं हा।
आलोकसे नो पुरुषस्य सर्वं तत्कीलितं पौरुषमप्यहास्ति ॥१३०॥

सा रोचते मे विदुला वरिष्ठा भूत्वापि नारी रिपुमर्दिनी या ।
रणेऽन्यथाजर्जरमात्मसूनुमोजोधराण्युक्तवती वचांसि ॥१३१॥

त्वं तिन्दुकालातमिव ज्वलाशु मुहूर्त्तमप्यस्ति वरं दशा सा ।
जिजीविषुर्मात्र तुषाग्नितुल्यं धूमायमानो वस भूमिपृष्ठे ॥१३२॥

जाज्वल्यमानाग्निशिखासमानि स्मरामि कुन्त्या वचनानि तानि ।
क्षत्रस्य पत्नी तु सुता ममास्मा एवाह् न आर्त्तिं सहते प्रसूतेः ॥१३३॥

आसीदहो किं विदितं न तस्या लप्स्यन्त आजौ तनयाः क्षतानि ।
सा कातरा किं न बभूव किञ्चित् किं रेपयामास दृशोर्जलं न ॥१३४॥

घटोत्कचाक्रान्ततरोपि कर्णस्तस्थौ महाशैल इवाजिभूमौ ।
जहास मित्राणि च हर्षपूर्णं तदीयमुत्साहमवर्धयन्त ॥१३५॥

विस्मर्तुं मामृत्यु युधिष्ठिरस्य शक्नोमि हे तात कथं वचांसि ।
भृशाहतोपि प्रमुदोत्पपात यः स्वौ पराप्यानुमितारिनाशः ॥१३६॥

विकत्थतेथं नितरां सदैव पराक्रमस्यात्मन आग्रजो मे ।
वदत्यहं ह्याधुनिकस्य ताना युगस्य वीरेश्वरमौलिरत्नम् ॥१३७॥

आ आ इति क्रन्दितवानजस्रं स्वमस्तकेनैव यथा समस्तम् ।
संसारभारं स बभार यस्मान्नतोप्यकाण्डं मरणं पराप्तः ॥१३८॥

यदोदयाद्येन स भानुनाजौ व्यलोकयत्खण्डितमात्मचर्म ।
उष्णीषहस्तेन कृपाणघातं न्यवारयन्नो विचचाल तानाः ॥१३९॥

वदस्यहो अल्पवयस्क एव भ्राताग्रजः सम्प्रति ते न मन्ये ।
कस्मात्त्वान्तःकरणं सदैव तत्पक्षपात्येवमिदं न जाने ॥१४०॥

मामेव किं पश्यसि हे पितर्न कत्याहतीर्नित्यमहो सहेहम् ।
त्रिभिर्यवीयस्यपि हायनैर्नो भवाम्यहं कातरतापरात्मा ॥१४१॥

न षोडशाब्दोप्यभिमन्युरासीद् रणे कुरूणामतिभीमकर्मा ।
न चक्र इद्धो विहसेन चक्रव्यूहप्रवेशव्रतधारणं सः ॥१४२॥

५

श्रेष्ठो रघूणां भगवांस्तु वंश आसीत्तदा पञ्चदशाब्द एव ।
तथापि तादृक्परवीरहन्तुर्लङ्कापतेर्मानमसावदासीत् ॥१४३॥

पराजयो मे सततं ह्यमुष्या इत्यात्मना ग्लानमना उवाच ।
अथ प्रकाशं निजगाद पुत्रि पुरातनं तत्सकलं हि जातम् ॥१४४॥

सोवाच लावण्यनिधिः किशोरी वनेश्वरस्फूर्तिमुपार्जयन्ती ।
जगाद किं भो जनकास्ति सर्वं पुरातनं जातमहो न युक्तम् ॥१४५॥

लोकेऽधुनापि प्रथितोऽस्ति रामः स वासुदेवोऽपि जनस्मृतिस्थः ।
कथं नवीनं सकलं न पृथ्व्यां पुरातनं चास्ति कथं समर्च्य ॥१४६॥

सैवास्ति नो किं जननी धरित्री सहिष्णुताशिक्षणदत्तचित्ता ।
सैवास्ति किं द्यौर्न विशालताया असीमताद्योतनबद्धमध्या ॥१४७॥

न द्योतते किं नियमेन भानुरादर्शभूतः सततं भटानाम् ।
न चीयमानोऽप्यपचीयमानश्चन्द्रोऽनुकार्यः किमुदेति धीरैः ॥१४८॥

ताराणि किं नो गगनस्य शोभां तथैव कुर्वन्ति मनोभिरामाम् ।
तथैव किं नो दिवसोऽभ्युपैति क्रमे समायातवति स्वकीये ॥१४९॥

निशा प्रभातं च परे विभागाः कालस्य नायान्ति तथैव किं भोः ।
रत्नाकरास्तीरमुखं तथैव प्रक्षालयन्त्यूर्मिकरेण किं नो ॥१५०॥

भागीरथी पावयते न सैव किमद्य लोकत्रितयं वहन्ती ।
किं चास्ति नो सैव कलिन्दकन्या देवेशलीलास्मृतिनुन्नखेदा ॥१५१॥

व्रजः स एवास्ति च सैव वृन्दा सैवास्त्ययोध्या मिथिला च सैव ।
गया च लुम्बिन्यटविस्त एव वाराणसी पाटलिपुत्रवत्साः ॥१५२॥

सैव प्रयागो मथुरा च धारा काञ्ची पुरी चोज्जयिनी तथैव ।
त एव सर्वे निषधादयोऽपि तदेव सम्प्रत्यपि तत्र सर्वम् ॥१५३॥

त एव सर्वे बदरीश्वरश्च रामेश्वरी द्वारवती पुरी च ।
तान्येव वेदाश्च पुराणशास्त्राण्यास्तिक्यमातिथ्यमथानुकम्पा ॥१५४॥

आकर्णयंस्तानि वचांसि पुत्र्याश्चिन्तातुरोतीव बभूव मोरोः ।
नानास्तु रुग्णो हृदयं दधार निर्भर्त्सनासङ्करदिग्धविद्धम् ॥१५५॥

कुमारिका चास्ति कनीयसी मत् तथापि मत्तोस्ति वरीयसीयम् ।
उपार्जयच्चापि यशोतिपाण्डु कीर्तिं सदा मेभिभवत्यहो यत् ॥१५६॥

इतीव चिन्ताकुलितस्य नाना ग्लान्या महत्या लुलितं मनोभूत् ।
महत्तरोस्मीति विसारणाय प्रावर्त्ततान्तःकरणप्रवृत्तिः ॥१५७॥

अन्येद्युरेवाभरणप्रसिद्धं स कारयित्वा निजसिन्धुरेन्द्रम् ।
तेन प्रतस्थेवरजानुयातो दम्भेन विस्मृत्य समं भ्रमणर्थे ॥१५८॥

अचिन्तयन्मामवलोक्य यामिरारोहणार्थं हठिनी यदा स्यात् ।
तदा तिरस्कृत्य नृपात्मजत्वं तस्याः समक्षं प्रकटीकरिष्ये ॥१५९॥

तथैव जातं सकलं तदीयादारम्भतो बाल्यमिता जगाद ।
निर्बन्धतो भोरहमप्युपैमि गजं क्षणं स्थापय बन्धुवर्य ॥१६०॥

निर्बन्धमालोक्य प्रियं परं तं कारुण्यरुद्धः क्षितिपो बभूव ।
उवाच हे पुत्र गृहाण यामिं मा निर्घृणस्तां प्रति भूरहेद्वक् ॥१६१॥

रावोनुगन्ता हृदयेन तस्यां श्रद्धां दधानोत्यधिकां किशोर्याम् ।
ब्रूते स्म नानां विरमामि तावत् काष्ठां परां याति हठो ह्यमुष्याः ॥१६२॥

परन्तु नाना भ्रुकुटिं विलोक्य विभूषितोसौ विनयेन रावः ।
भीतो न चोवाच मुखेन किञ्चिन्न च व्यरंसीन्मनसोनुकूलम् ॥१६३॥

स्वरेण भूपस्य रुरोध यावद् गजं गजाजीव उदीर्णशङ्कः ।
तावद् भयं तस्य ततान घोरं नानेङ्गितं प्रैरयदाशु येन ॥१६४॥

ऊचे मनू रोधय हे पितृव्य नानां पिता रोधय रोधयेति ।
सुविह्वलात्मा नृपतिर्बभूव मर्माणि कृत्तानि तथैव मोरोः ॥१६५॥

मनूस्तु सक्षोभभरा बभूव मत्तान्तरात्मा प्रतिशोधपूर्णा ।
एतादृशं दर्पविजृम्भणं धिगित्युक्तवत्याह शुभा स्वतातम् ॥१६६॥

आरुह्य वाहं निमिषेण तात गच्छामि रोद्धुं गजयूथमुख्यम् ।
मत्तीकरिष्येथ निपातयिष्ये तत्पृष्ठलग्नं नृपदारकं तम् ॥१६७॥

अनेन कृत्येन कृतं सुपुत्रि तस्य व्रणं घोरतरं यदि स्यात् ।
मानं स्वबन्धोः सहमान एव भवत्युदात्तश्च रणैकवीरः ॥१६८॥

निर्बन्धिनी मा भव कन्यके त्वं भाग्ये च भाग्ये लिखितं विभिन्नम् ।
इभ्यश्च कश्चिन्निधनश्च कश्चिद्विचित्रमेतज्जगदस्त्यनेन ॥१६९॥

भाग्यं त्वदीयं गजराजहीनं धैर्यं त्वया वास्वलम्बनीयम् ।
अलं निवेद्येन विडम्बनेयं गजाह्वयस्याटनं न युक्तम् ॥१७०॥

निशम्य तातस्य वचांसि तानि किशोरिका सा सहसा जगाद ।
भाग्यं मदीयं प्रबला गजा मे श्रेष्ठा भविष्यन्ति दशेति तथ्यम् ॥१७१॥

निरीक्ष्यौजःप्रवाहं तं
चञ्चलत्वेन मण्डितम् ।
जनकोचिन्तयच्छीघ्रं
विवाहोस्या अपेक्ष्यते ॥१७२॥

• • •

## सर्गः षष्ठः

न तिष्ठ भल्लस्व रिपुं प्रकामं भटेति भल्लस्य वचः सुतीक्ष्णम् ।
यशांसि शौर्याकर पालय त्वं सदेति वादी करपाल उग्रः ॥१॥

न मुञ्च तं नीवृत आशु गोपा इति ब्रवीत्याहव आशुगोयम् ।
गतो न को दण्डधरं पुरोरिर्ममेति कोदण्डमिदं तनोति ॥२॥

इति प्रतीहार उदैत्स्वराली जगाद तारेण नृपः स्वरेण ।
मनूरुपेतास्ति मनूरुपेतास्त्यहो प्रदिष्ठो मम भाव पंथः ॥३॥

इति प्रकाश्याथ जगाद नानां त्वयेरणीया वचसा ममासौ ।
पितृव्य आकारयते छबीलीं वदन्वरं तत्कृत आनयामि ॥४॥

दधाव सोल्लासमसौ त्ववादीच्छुभामितस्त्वं वृणुषे वरं किम् ।
वरालयं नः परिहृत्य यासि भ्रमस्यहो अग्निमधिश्रयण्याम् ॥५॥

वरं वृणोम्यामथ वारयामि त्वया वधूं सच्छविमग्रजेन ।
भ्रमामि तत्राग्निमधिश्रयण्यां प्रजावती भ्रामयते त्वयात्र ॥६॥

स उक्तवान् दीक्षित आप्तचित्रस्तदैव विष्टो गणको निशम्य ।
वधूः किमेषैव वरो भवेत्कस्तमीश्वरीयं गणयेत् तृणाय ॥७॥

ग्रहा यथास्या बलिनस्तथैव बलीयसी वास्ति ततोपि वाणी ।
इत्थं स्वरुद्रं क्व धरातलेत्र लभेत रुद्राण्यसमप्रभावा ॥८॥

बुधस्य काश्या गणकस्य कीदृक् फलावलम्बी ग्रहगोचरोयम् ।
प्रतापिताकोकनदं च कीदृग्विकासमस्या गतमास्यवाप्याम् ॥९॥

निधत्त नेत्रे इह राजयोगोप्यहो वधूः स्यात्पृथिवीप्रियस्य ।
गुरुश्च कीदृक् कलयाञ्चकार बलं मनस्विन्यतिपण्डितेयम् ॥१०॥

समानधर्मा तु पराक्रमिण्या भवेत्स झाँसीश्वर एव युक्तम् ।
स एव तेजोज्ज्वलितान्तरीदृक् स एव दुःसाहसचण्डकर्मा ॥११॥

स गौरवर्णानपि तर्जितेन विनीतभावं नयतेरिभूतान् ।
विलोकयामीयमपि प्रचण्डा प्रदास्यते साहसमेव तस्मै ॥१२॥

ततः सुधीशः स्वगतं जगाद भ्रुवा स्वराज्याप्तिरथाविलम्बम् ।
कृतेः फलं ज्ञास्यति गौरदेही रिपुर्द्रुतं गोहनने पटीयान् ॥१३॥

सभा तु जाता विकसन्मुखाब्जा प्रमुत्समेषां न ममौ मनःसु ।
गतागतं शीघ्रमभूत्प्रचारस्तदावरोधेऽपि महोत्सवस्य ॥१४॥

विलोचनोपान्तगृहीतवाष्पकणद्वयो विह्वलतां नृपोगात् ।
निरुद्धकण्ठश्च बभूव मोरौमुदातिरेकेण यतश्च तस्थौ ॥१५॥

तदैव चीनांशुकतोपटीतश्च्युता अदृश्यन्त विहासदीपाः ।
पुनः समासां श्वसितान्यपि द्रागगुः शमं श्रव्यकुतूहलेन ॥१६॥

अवादि ताभिर्जगतः समग्रमवाप्तमद्यास्ति न कापि चिन्ता ।
पराप्तमाशावसनाञ्चलं यन्महामहोल्लाससुरा निपीता ॥१७॥

जनन्यजीविष्यदहाद्य सा चेत्ततोभविष्यत्प्रमदोत्र कीदृक् ।
वदाम हा तां भवितव्यतां किं भवत्यशेषं न सुखं धरायाम् ॥१८॥

अयं च तोषो मनसो न मन्वा मनस्विभावेन कदापि नम्यम् ।
न च प्रभुत्वेन कदापि सह्या वचःशराः कीलितमर्मदेशाः ॥१९॥

रमा हरिं प्राप्य च रेवती सा पराप्य नीलाम्बरमुद्गतश्रीः ।
शिवं शिवा च प्रमदालसास्ति समस्तवाञ्छापरिपूरणेन ॥२०॥

अवाप्य सावित्र्यथ सत्यवन्तं दमस्वसा प्राप्य नलं तथैव ।
पराप्य रामं जनकात्मजा च भविष्यति प्राप्तमनोरथा द्राक् ॥२१॥

मुकुन्द आप्ते वृषभानुपुत्र्या समेषु कुञ्जेषु भवेत्प्रहर्षः ।
नरे तथोरङ्गमकन्यया स्यान्महोत्सवः क्षोणितले तथास्तु ॥२२॥

यशोधरागौतमयोश्च युग्मं प्रदर्शयेद् वर्त्म जगन्नवीनम् ।
तथा महासेनसुता विकासमवाप्नुयात्सोदयना प्रकृष्टम् ॥२३॥

मनूरूपेता शृणुतावधाय सुभाषिणी भाषणमद्य कुर्यात् ।
महौजसा तां विदुषीं ज्वलन्तीं स्वदृष्टिकया पश्य समाक्षयन्तीम् ॥२४॥

उवाद राजैहि सुते ममैहि विलोकयस्वेह समागताः के ।
उपेत्य तूर्णं प्रणमादरेण लभस्व चाशीर्वचनैर्विवृद्धिम् ॥२५॥

इमेत्र बुन्देलभुवोभ्युपेता वहन्ति तात्यामनु दीक्षिताख्याम् ।
अयिष्यसे त्वं भटनीवृतं तं विहास्यसीमां नगरीं सुपुत्रि ॥२६॥

मनूरुवाचाथ नमामि भक्त्या पदारविन्दे भवतोत्र लब्ध्वा ।
परं प्रसीदामि दृगन्तरं च प्रपूरितोल्लासभरे विधाय ॥२ ॥

महेढ्य बुन्देलधरात आप्तः किमस्ति नो पञ्चकविक्रमः सा ।
निपीतबुन्देलपदस्य कस्य स्फुरन्ति नो लोहितविन्दवोग्रे ॥२८॥

नृपः स किं मां परिखेतुकामः क्षमोस्ति योद्धुं रिपुभिः सिताङ्गैः ।
सदैव सम्मान्य किमाग्रहं मे रणेषु खेलायितुमस्ति योग्यः ॥२९॥

हयस्तदीयस्तु मदीयवत् किं समुत्पतेदम्बरलङ्घनार्थम् ।
कदम्बकेषु प्रविशेदरीणामभीतमेकोसिशयोस्तचिन्तः ॥३०॥

बुधोभयेनापि करेण खड्गौ स चालयेदाशु हयोपविष्टः ।
प्रतापसिंहादिकसन्निभः किं त्यजेदसौ जीवनसौख्यमोहम् ॥३१॥

इति ब्रुवाणामवदत्स तात्याः सवत्सिमासि प्रसभं चलेति ।
स पेशवाख्योपि जगाद बाढं भवान् यथाह प्रसभं चलेति ॥३२॥

कथं सहेतेदृधमतिः कथं स्याद्वचोविलासाद् विरताह बाला ।
बुधेश्वरौ संसरणैकशीलश्चलोस्ति संसार इति प्रसिद्धम् ॥३३॥

चलत्वमालिन्यथ सर्वमेव चलं भवेन्नाचलमत्र किञ्चित् ।
इयं तनुर्गेहमिदं पटोयं पतेत्समं कालमुखे कराले ॥३४॥

पितृव्य वार्जीति सुशंसनामाप्यरिः कथं त्वं बत चापलस्य ।
स्थिरत्वमेवास्ति वरं जगत्यां तदेव सञ्जीवनमस्ति सत्यम् ।।३५।।

किमस्यहो पण्डितराट् त्वमेव चलत्वसीमाविषयो वदेति ।
न किं वदत्येतिमुखक्रियार्था वदन्त्यहो चञ्चलतामयत्वम् ।।३६।।

गुरुर्भवानप्युत दीक्षितोऽस्तीत्यनिश्चयः किं चलता न विद्वन् ।
अयं नरो वाऽन्यथवेति शङ्काप्यहो पितृव्ये चलताञ्जनं नो ।।३७।।

रविश्च चन्द्रश्च भपङ्क्तयश्च स्थिरीभवन्त्युज्झितचापलाः किम् ।
नदीनदीशाश्च नदा वहन्ति कदापि पारिप्लवताविहीनाः ।।३८।।

यदीश्वरस्यासनमिद्धविद्य कदाप्यगाहिष्यत नो चलत्वम् ।
तदा कथं रावणकंसमुख्याः खला अमोक्ष्यन् कपटादिकं स्वम् ।।३९।।

विमुक्तपञ्चाङ्गगणो गृहाण महाप्रभो चञ्चलताव्रतं द्राक् ।
उरांस्यधिक्रम्य गुरुण्डजातेः कृपाणखेलां कुरु तत्र चारुम् ।।४०।।

समेभवन् स्तब्धशरीरवृत्ता अथाह मोरौरिहि वाटिकां त्वम् ।
नवां भुशुण्डीं हर तत्र पुत्रि विमुच्य विज्ञान् विहर प्रकामम् ।।४१।।

न्यपप्तदेकस्मितमन्दवृष्टिः कणे कणे सात्विकता व्यराजीत् ।
जहास तात्या अपि विज्ञ उच्चैः क्षणेन दुद्राव तमःप्रसारः ।।४२।।

स पेशवाख्योऽपि जगाद नत्या शिशुत्वमुक्तास्ति न पूर्णतोऽसौ ।
परं महौजा अपि तीक्ष्णबुद्धिरलङ्करिष्यत्यथ भर्तृगेहम् ।।४३।।

नृपः स गङ्गाधर एक एव कुलीन ऊनोऽस्ति ततो न मोरौः ।
वधूर्वरस्यास्त्यनुरूपसत्त्वा गुणाः समस्ता उभयोरपीह ।।४४।।

ममास्ति मोरौरनुजस्तदीया सुता मदीयापि पितृव्यभावात् ।
पुरो न मन्येत न रूपवत्याः शचीमपि प्राज्ञ नृपो हि चेटीम् ।।४५।।

समर्प्य पात्राय विमुक्तचिन्तो भवेयमङ्गाहमपीह तावत् ।
विलोक्य जामातृयुतां कुमारीं लभेय चानन्दमनन्तसीमम् ।।४६।।

उभौ भवेतामुभयस्य शोभे समप्रभावस्त्वुजिनीसरोभ्याम् ।
विकस्वरा मञ्जुलतोभयेन सदा जगत्या अधिकाधिकं स्यात् ॥४७॥

युता सुगन्धेन सुवर्णभा स्याद् भवेद् भवानी सहिता भवेन ।
हसेन्निशा चन्द्रमसान्वितालं लसेत्तरङ्गेण यमी च युक्ता ॥४८॥

भवेदहो योजयिता न धन्यो भवानपि प्राज्ञ न योग्ययोगे ।
विलोकयन्तो वयमप्यनूनं फलं लभेमह्यवलोकनस्य ॥४९॥

दिव्यं स्वरूपमथ तन्मनसाऽपि पश्यन्
दिव्यप्रभावबलितत्वमुवाह विद्वान् ।
दिव्यः प्रवाह उदगाद् द्रुतमेव कश्चित्
तापत्रयं यत उवाह भवात्सुदूरम् ॥५०॥

• • •

## सर्गः सप्तमः

श्रीतात्यादीक्षितो भूपं गङ्गाधरमुपागतः ।
आतिथेयस्य भाग्याय सर्वं ईर्ष्याम्बभूव ना ॥१॥

शुक्राचार्यः स्वयं द्वारं सम्प्राप्तो वृषपर्वणः ।
प्रतीहारं सुरेन्द्रस्य साक्षाद् गुरुरुपागतः ॥२॥

ऐद् वसिष्ठः स्वयं मामित्ययाद्रामोतिहर्षताम् ।
अभूद् धौम्यं गृहे वीक्ष्य फुल्लनेत्रो युधिष्ठिरः ।३॥

अभ्युत्थाय तदर्चार्थं नृपः प्रत्युज्जगाम तम् ।
दृष्ट्वा नारदमायान्तं पूतात्मेव धनेश्वरः ॥४॥

जवनेनोत्तरासङ्गो घृष्टकुट्टिम आगतः ।
वसन्ते लब्धसौरभ्यो वेपिताब्ज इवानिलः ॥५॥

पदोदकं समानय्य मधुपर्कार्घसंयुतम् ।
तस्मै दत्त्वा च कृत्वा तं विश्रान्तं न्यगदन्नतः ॥६॥

तात्यादिर्दीक्षितः श्रीमान् गुरुर्मे कष्टपूर्वकम् ।
अहो अत्रैव सम्प्राप्तो मन्ये नो धन्यतां कथम् ॥७॥

मनीषितं मनीषिन् हे वदतु प्रस्तुतं समम् ।
अदृष्टनुतिरत्रायं विकटो मुकुटो नतः ॥८॥

भवादृशां पदाब्जेषु मुकुटा ईदृशाः शतम् ।
नतितो यान्ति साफल्यं काङ्क्षेवाभिनिवेशतः ॥९॥

वद्यास्ते तूत्तमाङ्गेन भवच्चरणपाविताः ।
महिमानमजानन्त आत्मोन्नयनबाधकाः ॥१०॥

योगस्यास्ति महोपायः क्षेमं मूर्त्तिमदुज्ज्वलम् ।
भारतस्य च कौटिल्यशिछन्नस्य नयपालकः ॥११॥

वदन्तु चेच्छतघ्नीनां जयामि ध्वानतो घनम् ।
घनदर्पं हिमाद्रेरप्येजयाम्यस्त्रतः शिरः ॥१२॥

यात्राभिर्दीर्णभूमिर्वा भूकम्पं प्रारभेधुना ।
अकाण्डारब्धकल्पान्तः क्षोभयाम्यब्धिमारवैः ॥१३॥

वदन्तु द्राक् क आदेशो भाग्यं तत्पालनं मम ।
भवतां कौत्स एषोऽस्ति वश्यः प्राप्तानुशासनः ॥१४॥

कथयन्तूपमन्युः स्वैः प्राणैः क्रीणातु साधनम् ।
स्वागतार्थैकलब्धोयं दत्तचित्तमपेक्षते ॥१५॥

व्यावर्त्तेत न भीष्मोयं स्वार्पणादङ्घ्रिकिङ्करः ।
उत्सर्गो भवता शिक्षा दत्तैवाणावणौ तनोः ॥१६॥

महोग्रो न कदाप्यासीद्यथा दान्तोधुना नृपः ।
इष्टोवसर इत्येवं चिन्तित्वाथाह दीक्षितः ॥१७॥

स्वस्ति भूपकिरीटालीमण्डिताङ्घ्रय आनयम् ।
प्रजानां दुःखमग्नानामावेद्यं भवतः प्रति ॥१८॥

अद्य कालोस्ति पर्याप्तो राज्ञ्या यान्त्यास्त्रिविष्टपम् ।
एकपत्नीव्रतो देवो रामवत्सुमहाशयः ॥१९॥

युक्तमेतत्कुमारेण विना भ्राँस्यास्तु नो शमः ।
प्रजा आयतिचिन्तायां विलीनाः सन्ति सर्वदा ॥२०॥

गेहरत्नं तनूजो वै तेनैवास्ति कुलोद्धृतिः ।
पठ्यते भारते काव्ये सुतहीना हि पापिनः ॥२१॥

इतिवृत्तं वदत्येव पुराणं चापि तन्मतम् ।
छित्वा सुकृतिसन्तानं निरये पच्यतेसुतः ॥२२॥

भारते तावदङ्ग्रेयल्लिखितं विद्यतेमलम् ।
पातयत्यसुतः सर्वान् पूर्वजानपि स्वोपमम् ॥२३॥

आनमय्य शिरः कांश्चिच्चिचिन्त निमिषान्नृपः ।
आनिन्ये स्वीकृतिं मत्वा लक्ष्मणो जन्मपत्रिकाम् ॥२४॥

निर्दोषं प्राप्य सम्बन्धं घोषयामास दीक्षितः ।
विवाहो भविता राज्ञश्चीयतां वस्तुसंहतिः ॥२५॥

यज्ञद्रव्यशतं गृह्णन्नृत्विजानानां गणः समैत् ।
तन्त्रलीना अहोरात्रं बभूवुः किङ्कराः समे ॥२६॥

आसन्नाज्यघटा लक्षं सहस्रं शर्करागृहाः ।
काष्ठकूटाः शतं वस्त्रपेटकान्ययुतं तथा ॥२७॥

अन्नपूर्णा यथा लक्ष्म्याः स्वागतार्थमुपस्थिता ।
ऋद्धयो जडतां प्राप्ताः सिद्धयश्च विवर्णताम् ॥२८॥

भ्रातृव्या पेशवा राज्यः साधोर्मोरोश्च पुत्रिका ।
माताप्तास्ति मनूः शीघ्रं कुसत्तारेर्गमिष्यति ॥२९॥

इयमेवाभवच्चर्चा पर्यूढो भावसागरः ।
मनःशिखावलोनृत्यद् हर्षराका तथास्फुरत् ॥३०॥

प्रजानां मानसे मन्वा उदैन्मूर्त्तिर्मनोरमा ।
अभूत्तच्छूरताकर्म स्नायौ स्नायौ गतिप्रदम् ॥३१॥

केनाप्यूचे मृगेन्द्रस्य गह्वरं गाह्यते तया ।
दन्तानुत्पाट्य हस्तीनां पूर्यते सङ्ग्रहालयः ॥३२॥

व्यसारीत्किंवदन्तीयं सिद्धिं याता जनेश्वरी ।
स्निग्धं तस्यै ददौ दुर्गा खड्गं नैजं सलोहितम् ॥३३॥

भस्मसात्कुरुते तस्याः क्रोधो मन्दीकृतानलः ।
यशोमित्रस्य निःशेषं निमिषेण हरत्यहो ॥३४॥

इत्थमेव शतं वाचो झाँस्यामाप सुविस्तरम् ।
सर्व एव दधारालं वाचालत्वात्मविस्मृती ॥३५॥

झाँस्यामेव विवाहः स्यात् लमं निश्चित्य पेशवा ।
प्रशस्यं लग्नमुक्त्वेष्टं तात्या झाँसीं न्यवर्त्तत ॥३६॥

निकषोपयमस्याहन्युपेते वाद्यसंहतिः ।
माधुर्यावाद्यतायाता भू ाली देवसन्निभा ॥३७॥

मण्डपस्तु विवाहस्य माहेन्द्रीव सभालसत् ।
तिलस्यापि पदं नासीत्समीपस्थेषु वर्त्मसु ॥३८॥

विमानेन तमैश्वर्यं श्रीमल्लोको व्यलोकयत् ।
कौशेयप्रतिसीरान्तः स्त्रियो हृष्टाः सहर्षणाः ॥३९॥

मनूमृजुतरां दृष्ट्वा ब्रह्मावर्त्तजनाः स्मितम् ।
चक्रिरे विस्मितत्वं तान् दृष्ट्वा झाँसीजनाः परम् ॥४०॥

आत्मन्येव जहासासौ धृतशाटीविभूषणा ।
यथा स्यादट्टहासो नो तथाधात्सावधानताम् ॥४१॥

वसाना कौशिकं पट्टं वितानं वारिणामिव ।
हंसालीमञ्जुलप्रान्तं सालङ्कारा ततान भाम् ॥४२॥

रत्नाकरसमुत्थेव रमा प्रत्यग्रमन्थनात् ।
स्फुरन्तीव च रेजे सा चञ्चला मेघजालतः ॥४३॥

विनायकस्तु तत्रासीद् रतः संस्कार ऋत्विजः ।
संमर्दश्च जनस्याभूत् परिहासपरायणः ॥४४॥

विघ्यन्तराणि सम्पाद्य क्लान्तः साप्तपदे द्विजः ।
क्षिप्रकृद् धूपरुद्धाक्षो ग्रन्थिबन्धरतोभवत् ॥४५॥

क्षिप्रकारित्वतः कार्यं सम्पन्नं स्यात्कथं क्वचित् ।
विलम्बोभून्मनूस्वान्तं चापल्याय प्रणोदितम् ॥४६॥

श्लथा भवेद् यथा नैव तथा ग्रन्थिर्निबध्यताम् ।
इत्युक्त्वा सत्रपायंसीज्जिह्वामाचारभङ्गतः ॥४७॥

मानसादट्टहासोगाद् विहासेन तु मुद्रितः ।
लोकः किन्तु विरामं नैज्जहास च ननर्त्त च ॥४८॥

आसामास लिखन् मोरौनैर्नखैर्भूमिं भृशं नतः ।
वयोनुयोज्यभावाभ्यां गम्भीरो नृप आनतः ॥४९॥

प्रससार कथा पुर्यां विद्युत्स्फुरणवत्समा ।
छदिस्था अप्युपैन् द्रष्टुं वधूं जीवनसन्निभाम् ॥५०॥

सम्पन्ने कौतुके तस्मिन् महाराष्ट्रविधानतः ।
स्वानुरूपं मनूनमि लक्ष्मीरित्याप नूतनम् ॥५१॥

नान आप्रष्टुमायाते सोवाचैष्यसि सत्वरम् ।
मध्ये मध्ये समं तात्या बाला रावेण बन्धुभिः ॥५२॥

प्रस्थाने जनकावासात् पितृव्यस्य दृगम्बुजे ।
सजले विस्मरेथं न प्राप्तसर्वापि ते इति ॥५३॥

बन्धुतासुलभो भाग्यात् प्राज्ञ एष इतीश्वरः ।
जामाता श्वशुरं मोक्तुं नावाञ्छन्निजराज्यतः ॥५४॥

सामन्तत्वेन सम्मान्य तं विप्रं निजसन्निभम् ।
मन्यते स्म निजं भूपः सम्मानितमथोच्चकैः ॥५५॥

षोडशाप्ता वधूं दास्यः सखीबुद्ध्या तु सेश्वरी ।
ता मेने च जगादाशु द्रष्टुकामास्म्यहं पुरीम् ॥५६॥

वध्वा आ .ोभिलाषोयं कथं स्यात्पूर्णताच्युतः ।
असौ प्रदक्षिणाकामा प्रतस्थे भूभृदाज्ञया ॥५७॥

शिविकायां वधूस्तस्थावश्वपृष्ठे धरापतिः ।
लोचनप्राघुणीकर्तुं दम्पती गोपुरे पुरम् ॥५८॥

आह सश्रद्धतास्नेहयोर्मिश्रणं
विभ्रती कापि दासी सहालौकिकम् ।
तां पुरीं तां सुरम्यां विशिष्टे स्थले
रोधयित्वा विमानेन यानं समम् ॥५९॥

• • •

## सर्गोऽष्टमः

तत्र झाँसीपुरीं रम्यां निरीक्षस्वायि लालसे।
उत्थितां हृदयप्रान्ताद् रसाया इव लालसाम् ॥१॥

विलोक्यत इतो लक्ष्मीं वरप्राकारवेष्टिता।
श्रेष्ठव्यूहनिबद्धेव राजसेना सुरक्षिता ॥२॥

कस्तूरीव जनानां ते स्वान्ते वसति विश्रुतिः।
सर्वे श्रद्धायुतास्त्वां प्रत्यत्र प्रान्ते नरीनराः ॥३॥

दश क्रोशानमी मार्गाः सज्जायुक्ता बहिः पुरः।
उत्साहोध्यटविश्रामं चीयते नापचीयते ॥४॥

यथेमे स्थावरे प्रस्वौ झाँसी भूमिश्च भारती।
तथैवासि प्रजानां त्वं जङ्गमा देव्यहो प्रसूः ॥५॥

इदमल्पं वयो दृष्ट्वा वदामश्चेन्न किं ततः।
वीक्ष्य शान्तिमयीमेतां तिष्ठामः करुणां कथम् ॥६॥

भूमिमालोकयत्वेतां कृतकृत्या भवेदियम्।
दयापाङ्गं करोत्वस्यामासेचनकदर्शने ॥७॥

मनोहरेव गीतिस्त्वं प्रीतिर्जन्मान्तरादिव।
प्रतीतिरिव भावस्य कस्यचिन्नवनीमृदो ॥८॥

कृष्णकौशेयकेशोऽयं मञ्जिम्ना शोभते परम्।
वृता चीनांशुकेनालं भाति शीर्षसुमाल्यपि ॥९॥

गृह्णात्कुवलयद्वन्द्वं पुण्डरीकमिदं रमम्।
झाँसीकीर्त्तितडागस्य शोभा भूयादनुत्तमा ॥१०॥

प्रहरीव स्थितोऽत्रैष वप्र आभाति सुन्दरः ।
हिमतापौ च वर्षांश्च सहमानो निरन्तरम् ॥११॥

धावन्तीव सदाऽस्याङ्घ्रिं वर्त्तते परिखा तता ।
भुजिष्या संयमस्यात्र सत्ता लोके महत्यपि ॥१२॥

मन्ये ते करदाः पत्युर्भजन्त्यम्भोधयो भयम् ।
वारिस्वं तत्प्रदत्तं यद् वर्त्तते परिखागतम् ॥१३॥

गोपुरं वर्त्तते द्वारि स्वागतार्थमनावृतम् ।
बिभ्राणं कीलकव्याजं रोमाञ्चं दर्शयत्यलम् ॥१४॥

कपाटौ गारुडौ पक्षौ भञ्जनाभिभवाधनौ ।
विमानवत्पुरं याभ्यां संप्राप्तालौकिकोद्गति ॥१५॥

भात्येवं दार्ढ्यतोरीणां च्यावयित्या कठोरताम् ।
शस्यन्त्रेण तन्त्रेण केनाप्येनौ नृपो व्यधात् ॥१६॥

पिधीयते यदा द्वारं कदाचित्पातितार्गलम् ।
मृत्युप्रतिभटो भाति भागदत्त इव द्विपः ॥१७॥

प्रशस्ताश्चारवो मार्गा हरिविक्रमसन्निभाः ।
वाहनानां तता एते गन्तव्यप्रापणे रताः ॥१८॥

आपणा नवला एते प्राप्य पौरान् सुसज्जिताः ।
वैश्यपुत्रैर्वचोदक्षैर् सभ्यैरिव विलस्यते ॥१९॥

ऐहिकी सकला सम्पत् कृष्यमाणात्र राजते ।
यदन्यत्र तदत्रात्र नो यन्नान्यत्र तत्क्वचित् ॥२०॥

विश्वरूपं कुरुक्षेत्रे यत्कृष्णोदर्शयच्चलम् ।
तत्ततो विलयं यातं भूमायातोऽत्र सुस्थिरम् ॥२१॥

नवीनाः सुन्दरा वीथ्यो रत्नराशिसमाकुलाः ।
मन्येऽत्राब्धिरभूदद्य ससूक्ष्मावार्यपासरत् ॥२२॥

वर्धमानं प्रवेगेण संमर्दं स्थापयन् नयन् ।
प्रत्युप्त इव कर्त्तव्यहेतोरेष भटव्रजः ॥२३॥

भाति प्रान्ते पथश्छायावृक्षा इव जनावलिः ।
वसाना वसनं तुल्यं किर्मीरा भ्राजते चमूः ॥२४॥

सदृशाः पीलुकैर्दृश्या आदुर्गात्कोणतस्ततः ।
वीरतां वैभवं युग्मीभूते पश्यन्ति दर्शकाः ॥२५॥

विमलं राज्यमस्त्यत्र व्यभिचारी न विद्यते ।
त्वदङ्घ्रिभ्रमणे लीनाः सर्वे सन्ति मधुव्रताः ॥२६॥

व्योम्नस्तारा अपि च्छिन्द्युरेते प्राप्य तवेङ्गितम् ।
आनयेयुश्च पीयूषं सोमं निष्पीड्य वस्त्रवत् ॥२७॥

पश्य तत्र परं मञ्जुदूर्वाक्षेत्राणि भान्त्यलम् ।
आस्तृ व पलाशाभा कुथा श्लक्ष्णा परद्युतिः ॥२८॥

मार्गोपान्ते प्रसूनाढ्याः शोभन्ते राजिका अमी ।
अत्र चित्रपतङ्गाली चित्रवस्त्रा भ्रमत्यलम् ॥२९॥

विक्रीतान्यपि रत्नानि ह्रासं गच्छन्ति न क्वचित् ।
सुमितानि च तानीति रत्नायन्ते सुमानि किम् ॥३०॥

सुलभात्र दृशा स्वामिन्युद्यानाली सुदुर्लभा ।
मेदिनीदर्शनोत्कण्ठमवतीर्णं न नन्दनम् ॥३१॥

मन्दिरावलिरेषात्र शङ्खपद्मादिचित्रिता ।
विमाना इव देवानां भ्लाशन्ते लक्षवर्णमाः ॥३२॥

प्रासादास्तत्र हर्म्याणि विमानाश्च महोच्छ्रिताः ।
नालका यत्पुरः कापि भीतात्मा चामरावती । ३३॥

सौधस्थस्तत्र दृश्योसौ मयूरः कृत्रिमो रमः ।
त्वत्केशाः किं न पिच्छानीत्यवलोकन आनतः ॥३४॥

अस्यैवास्ति समीपेयं भ्रमेणागतवाङ्शिखी ।
बर्हिणो वर्तते यस्मात् सौधे सुषमता परा ॥ ५॥

ददत्यः सुसहामाभां महानीलोपकारिकाः ।
तत्र सन्ति पदे शीर्षे यत्र मेचशशिप्रभे ॥३६॥

सोपानं स्फाटिकं तत्र मेदुरं भ्राजतेमितम् ।
यत्र स्खलति सूर्योपि विम्बच्छलत आगतः ॥३७॥

कुट्टिमेपुच्छदो राका विस्तारयति सच्छटाम् ।
मणिदीपप्रभं दीप्राः समा अट्टालिका इह ॥३८॥

समण्यां भुवि कासारे परिखादर्शयोस्तथा ।
तारतम्यं स्वरूपस्य नक्षत्राली विलोकते ॥३९॥

चन्द्रकान्तमणिव्रातैर्भवनाल्यत्र निर्मिता ।
अत्रत्या यत्र काङ्क्षन्ति तपर्तौ तपनावनम् ॥४०॥

सुधारूपमवाप्नोति स्थितास्यां कौमुदी पुनः ।
जडिमात्र क्षणेनैव हरेच्छीतलताक्षुधम् ॥४१॥

दुर्गमेतत्पुरो लाजाः कीर्यन्ते कुसुमान्यहो ।
वातायनालिरिन्ध्रास्यै - र्वामानां तुन्दिलच्छटा ॥४२॥

एकत्र जगतः सर्वं सौन्दर्यमवलोकितुम् ।
समावेशयदत्रैव रुच्या किं न चतुर्मुखः ॥४३॥

निर्मितः प्रस्तरैः कोटो दुर्जेयो घोरसुन्दरः ।
यत्र वज्रमपि व्यर्थं शतघ्न्यास्तु कथैव का ॥४४॥

अत्र त्वच्छौर्यगाथालीः कदाचित्पुरयोषितः ।
शृण्वन्त्यो हृदयं वज्रं विधास्यन्ति प्रहर्षिताः ॥४५॥

एकस्मिन् दिवसे योद्धृस्त्वां नेत्रीकृत्य योषिताः ।
सौदामन्यो भविष्यामो वर्धमाने रिपुव्रजे ॥४६॥

वैजयन्त्योत्र संसक्ता इन्द्रध्वजसमाः समाः ।
अर्द्धवृत्तीभवन्त्यश्च क्वापि शक्रधनुःप्रभाः ॥४७॥

तत्सखीमुखकृतां वचश्छटां सा निशम्य मधुरां नवा वधूः ।
भ्रान्त आशु हृदये द्रुतं न्यधात् तां पुरं प्रति निजत्वमुन्नतम् ॥४८॥

प्रथमावलोकनत एव
बहुतरमसौ मुदं गता ।
तत्पुरत उदयते स्म तदा
सहसैव तन्मनसि सान्त्वनाभरः ॥४९॥

• • •

## सर्गो नवमः

बभूव चर्चाविषयो गृहे गृहे नृपाङ्गना सैव तदा यशस्विनी ।
निजत्वपूर्णानि जनस्य रेजिरे समस्य भाष्याणि वचनानि तां प्रति ॥१॥

इयाय यत्कर्मकरीसमूहनं तदेकसख्यं गमितं तया द्रुतम् ।
अवाप्य सेव्यां तदपीश्वरीममूं परं समासादितवन्मुदोवधिम् ॥२॥

शशाङ्कमुख्या मुखमाप शोभितां सखीभिरेभिर्धृतमक्किरक्किभिः ।
तथा प्रभां विन्दत ओषधाधिपो यथा कलाभिः सकलाभिरुज्ज्वलाम् ॥३॥

सखीषु तिस्रो निखिलासु षोडशस्वभन्यतासावधिपा सहोदराः ।
सदानने बभ्रुरनल्पभे च ता भहोदयां तां प्रति भावसञ्चयम् ॥४॥

सखीषु सुन्दः प्रथमापरा स्वसृष्वभूत्तथा काश्यथ सुन्दरन्तिमा ।
त्रयी प्रतिस्नायु दधार साधिपासमं स्वदेशं प्रति भक्तिमुत्तमाम् ॥५॥

कलावतीर्णा इव ता विरेजिरे महाकराल्या असुरप्रणाशने ।
सदैव लक्ष्म्या हृदये पुरीं प्रति प्रपूरयामासुरनल्पमादरम् ॥६॥

लयं व्रजन्त्योधिनृपाङ्गनं तु ता बभूवुरस्याः पर ऋद्धिसञ्चयः ।
सदैव सोढ्वापि महार्त्तिसंहतिं मुखानि दध्रु र्विकचानि तत्कृते ॥७॥

सखीजनोसावथवा फलोन्मुखं शुभं कृतं जन्मनि यद्गते मया ।
विचिन्तयन्ती हयाब्जसंनिभं दमसीमितस्पृ विलोकयामास शुभा तदाननम् ॥८॥

सहैव राज्ञ्या विचचार सन्ततं सखीसमूहः प्रतिबिम्बसन्निभम् ।
अलौकिके भावसमुद्र उद्धुरं प्रवाहयामास दिवानिशं सदा ॥९॥

दशां नरीणां पुरि तत्र तत्त्वतो निशम्य ताभ्यः स्वसखीभ्य उत्सुकम् ।
विचिन्तयामास कथं समा अहं प्रपूरयेयं नवजागरेण ताः ॥१०॥

प्रजाश्च संश्लेषयति स्म संनयः स शृङ्खलासन्धिरिवेश्वरीं च ताम् ।
स्वतन्त्रताया रहिता परं सदा नृपालपत्नी बहु कुण्ठिताभवत् ॥११॥

मनः क्वचिद् वाराणसीं जनन्यगाद्विधातुमेकस्मृतिवागुरागताम् ।
जहार मूर्तिः प्रतिपद्य पेशवास् तदीयमन्तःकरणं बलात्क्वचित् ॥१२॥

अहो तयोः कुत्र जनीस्वतन्त्रतापरो विचारस्त्वतिमात्रमुज्ज्वलः ।
करिष्यते हृष्टतनूरुहामिमां विहङ्गमीं मां धृतमुक्तिलालसाम् ॥१३॥

इतीव चिन्ता बहुधा महीयसीमशान्तिमानीतवती तदन्तरम् ।
पदे पदे लौकिक बन्धनं च तां प्रसह्य नित्यं युयुजे स्वभञ्जने ॥१४॥

विलोक्य पत्युर्वदनं परं तु साविरामभुत्कान्तित आपतत्पुनः ।
विहासमादाय मुखे यथेप्सितं ससाह लोकस्य कृतं निरन्तरम् ॥१५॥

सदा यदातिव्यवहारकोविदः पतिर्नृपो लोकपरायणो मम ।
अहं तु लोकव्यवहारसंहतिं प्रतीपये नैव विनाशये क्वचित् ॥१६॥

विचिन्त्य चाहूय विमृश्यकारिणी सखीर्नयां शीघ्रमिलेशवल्लभा ।
अबोधयद् भारतवर्षहेतोर्नरीजनानामुपयोगितां भृशम् ॥१७॥

वदन्ति नारीमबलां नरास्तु यां न सा तथेत्यस्ति दृढं मतं मम ।
भवस्य शक्तिः पुरुषार्थमुन्नतं कदापि मा गाद्बलत्वहीनताम् ॥१८॥

स उत्पथं चेत्प्रतिपद्यते नरो विबोधयध्वं सुचिरं समाहितम् ।
भवेत यूयं तु सदैव साधिका न बाधिकास्तत्पुरुषार्थसेवने ॥१९॥

अतीव पुष्णीथ जनीस्वरूपतो निजेन रक्तेन रसेन चाञ्जसा ।
तथा भगिन्यः प्रणयेन सोदरान् निकाममानन्दयथाथ तान् नरान् ॥२०॥

ससान्त्वनैर्वाग्रचनैर्नरावलेर्विनोदयध्वे दयिताः परिश्रमम् ।
निकेतने देवनिकेतनच्छटां प्रदर्शयध्वे परिमार्जनादिभिः ॥२१॥

यथा विधानं सदनस्य लिप्सितं भवेत्तथैतद् भरतावनेरपि ।
नरा यदैव प्रविशन्ति निर्भयं रणाङ्गणान्तः प्रविशाम तत्क्षणे ॥२२॥

प्रशिष्यमाणा परदेशवासिभिः क्षितिर्विदीर्णा भरतस्य सम्प्रति ।
प्रजाश्च हाहेति वदन्ति सन्ततं वहन्ति चान्तःकरणेन यातनाः ॥२३॥

यदीयमेतद् धरणीतलं शृणोत्यहो स पश्चाय तुरुक्किसन्ततिम् ।
विरोद्धुकामा सकला दशामिमां न साहसं किं तु सहायताकरम् ॥२४॥

सहायहीनत्वविशङ्कितादिभिर्भवेन्नरश्चेत्परमः समाकुलः ।
असृक्प्रवाहो धमनीषु तस्य तद् द्रुतं भवन्त्यः स्फुरतौजसोद्धुराः ॥२५॥

भवत्वथो विस्मयमूढतां गतो नरः सुशीघ्रं पुरुषत्वमन्दिरम् ।
शिखां तथोद्दीपयतोज्ज्वलां यथा लभेत जागर्त्तिधनं जनो जनः ॥२६॥

अलङ्कृतीनां निचयैरलं भवेत् सदानुकूल्यं खलु देशकालयोः ।
इति ब्रुवन्त्याप्तजना न शोभते श्मशानभूमाविह भूषितं क्वचित् ॥२७॥

न किं भुवं निघृणकार्थतः परे शतानकं चक्रुरिमामशेषतः ।
न पौरुषं किं भजते विलोपितां जनो जनोत्र क्षितिवर्धनोस्त्यहो ॥

सेविकाः स्फूर्तियुक्तानि श्रावं श्रावं वचांसि ताः ।
स्फूर्त्तिमुद्दीपयामासुर्गेहं गेहमवुद्ध्यत ॥२९॥

वामा झाँसीनिवासिन्यो दर्शनार्थं समापतन् ।
लक्षेणापीक्षितैस्तृप्ता न तद्दृष्टिः कथञ्चन ॥३०॥

उत्सवव्याजतः प्रायो झाँसीश्वर्यपि सन्मतिः ।
उपायं मिलितुं ताभिरन्विष्येपोपयोगिनम् ॥३१॥

समागमेषु तेष्वेव क्रान्तिबीजमवप्त सा ।
समग्रमेव बुन्देलखण्डं चक्रे यशश्चयम् ॥३२॥

तेजस्तदीत्तममवाप्य महेश्वरीतो दुर्गा बभूव महिला महिला नगर्याम् ।
देशं सुदूरमपि विश्रुतयः परापुर्लक्ष्म्या अनुत्तमविकासपरा अमुष्याः ॥३३॥

सङ्ख्या बभूव च पुरि द्विगुणा भटानां हर्षाम्बुधौ सततमज्जनशीलभाजाम् ।
तत्सङ्ख्यया सहितमेव बभौ तदीय उत्साहराशिरपि स द्विगुणप्रसारः ॥३४॥

गेहे गेहे गतौ व्याप्तिं मल्लस्तम्भपरिश्रमौ ।
करवालप्रभृत्यर्चा तद्दुर्गायास्तता परम् ॥३५॥

अङ्गानि यानि कुसुमास्तरणेऽपि पूर्वं झाँसीनरीसमुदयस्य गतान्यशान्तिम् ।
तान्येव हन्त निहतान्यसहन्त कुन्तैर्दण्डैश्च सन्ततमहो नितरां व्यथालीम् ॥३६॥

मान्द्यं गतं झणझणायितमाशु झाँस्यां तत्कङ्कणोत्थमथ किङ्किणिकाप्रसूतम् ।
आघातजातमपि कन्दुकजातमापत्तद्धिस्मृतिं खणखणायितमपि शास्त्रम् ॥३७॥

वीराग्रणीस्त्वरितमङ्गणमङ्गणं या
चक्रे रणाङ्गणमनल्पमुदग्रमूर्त्तिः ।
तस्या जयध्वनिरभूत्क्षितिपाङ्गनाया
आसादयज्जनगणो गरिमाणमुच्चैः ॥३८॥

• • •

## सर्गो दशमः

अयि स्वामिन् सहायो हा कोवशिष्टोद्य मामकः ।
दत्तवानसि मय्यद्य जीवनावधि रोदनम् ॥१॥

वैधव्यं यापयन्त्यन्या धैर्यं प्राप्यावलम्बनम् ।
नीतवांस्तदपि प्रेयन् समं धिग्भवितव्यताम् ॥२॥

हा राज्येन किमुर्व्या किं वन्धुभिः किं महाशय ।
सह त्वयैव भूता मे समाप्तिः सौख्यसन्ततेः ॥३॥

नारीणां भारतीयानां रागः पत्युरुपस्थितिः ।
वैराग्यं च भवत्यासां निष्पतित्वानुबन्धनम् ॥४॥

स्मरस्यकथयस्तस्मिन् दिनेश्वावावयोः समम् ।
समरप्राङ्गणे शीघ्रं डीयेते विजितानिलौ ॥५॥

भविष्येहो क आगत्य सहायो भविता मम ।
अगच्छस्त्वं दिवं नाथ कृत्वानाथामतीव माम् ॥६॥

अगच्छस्त्वं सुगम्भीरा गम्भीरत्वदशा प्रभो ।
वेदनावेदना नीतिर्नीता लोपं क्षता क्षितिः ॥७॥

श्रीश्च विश्रीरधिश्रीकाः श्रीहीनाश्च महेश्वर ।
भारतीलालिता जाता दीनास्तापप्रतापिताः ॥८॥

प्रतीक्षिष्ये कमीशाये हाद्य प्रभृति दुर्गता ।
दुःखामायां चलिष्यामि करं कस्यावलम्ब्य हा ॥९॥

देशस्य भारतस्याद्य जागर्त्तेः कल्पनां नवाम् ।
कः करिष्यति च श्रोष्यत्याजिमार्गवचोवचाः ॥१०॥

हताशो रोदिति च्छय्यां मुक्तकण्ठं पिताधुना ।
हन्त हन्त तदीयस्तु सर्वनाश उपागतः ॥११॥

जनन्यां मे दिवं यान्त्यां नारोदीद् वीक्ष्य मे मुखम् ।
सोपि वाष्पसमूहोद्य व्यथालेखस्तदानने ॥१२॥

दत्तात्रेयः सुपुत्रोयं तावकीनोतिलालितः ।
उत्सङ्ग उपविष्टो हा रोदनानुपमोभवत् ॥१३॥

नोद्बोधं लप्स्यते तातः किमेवं पतितः प्रभु ।
वत्सिम्ना मस्तके मे किं न किरीटं निधास्यति ॥१४॥

किं नु क्रन्दस्यहो क्रन्द न क्रन्दयसि किं बत ।
जीवयिष्ये तमानीय भेषजानां चयं द्रुतम् ॥१५॥

वैद्यो नाद्यावधि प्राप्तो हकीमोपि न दृश्यते ।
किमर्थं चात्र निःसीमः संमर्दो जनयित्रि हे ॥१६॥

अशेत लक्ष्मणोप्येवमुड्डीय हनुमान् द्रुतम् ।
प्रस्थितो धृतसंजीवन्याप्तिनिश्चय उद्भटः ॥१७॥

आत्थ त्वं सततं श्रीमान् सोस्मद्रक्षापरायणः ।
आकारयसि हा तं न किं तदा व्यथयाप्लुता ॥१८॥

सेव वा गिरिधारीव किं न वीरोद्य कश्चन ।
उत्पाटयतु यः शैलं दूरयत्वापदं समाम् ॥१९॥

इत्येवं कथयत्येष वाक्यं समधु दृश्यताम् ।
हन्त किन्त्वद्य सौख्यं मे चूर्णयत्येतदीश्वर ॥२०॥

स्थापयिष्यामि कस्याङ्के पुत्रमेनं सवत्सिम ।
दृष्ट्वा कस्याननं कम्रं सहिष्येवशताहतिम् ॥२१॥

वैद्यराजः प्रतापोयमाशानिर्बन्धतश्युतः ।
पौनःपुन्येन शून्येक्ष आकाशमवलोकते ॥२२॥

मन्यमानस्तनूजं मां को निर्बन्धं सहिष्यते ।
मदग्रे दास्यते को वा दर्शनं मानमात्मना ॥२३॥

इत्युक्त्वा हन्त निःश्वस्य सोऽङ्घ्रिक्षुण्ण इवोरगः ।
निखातं हृदये तस्य गम्भीरं कण्टकं शितम् ॥२४॥

औषधानां च ते मूल्यं पश्यन्नेव वतावदत् ।
आदास्ये देवि तत्रैव स्वामिनो निलये गतः ॥२५॥

मूल्यमाप्तं न किं माता रोदनं तोषदायकम् ।
पुनर्वित्तेन किं तेन वर्त्तते मेऽक्षयो निधिः ॥२६॥

धत्ते ध्रुवपदं गायन् कण्ठे मुगलखाँ व्यथाम् ।
गानमेवाश्ररूपेण निर्याति च्छिन्नलोचनम् ॥२७॥

चित्रकृत्सुखलालोसौ रेखालीं विदधाति याम् ।
दूषयत्यश्रुजालं तं कम्पनं वक्रयत्यलम् ।२८॥

अङ्घ्रियुग्मे विनीतो मे पुत्रवत्कः पतिष्यति ।
इत्युक्त्वा मुञ्चति न्यायं श्रीभोग्टकरो रुदन् ॥२९॥

हृदयेशापराख्योसौ हीरालालः कवीश्वरः ।
हृदयेशः क्व हेत्युक्त्वा काव्यं नैजं छिनत्त्यहो ॥३०॥

श्रृङ्गारं मादकं त्यक्त्वा पजनेशो महाकविः ।
म्लानवेशो ब्रवीत्यार्त्तः करुणः केवलो रसः ॥३१॥

आनन्दो यद्दिने तत्र समानं त्यक्तवान् सदः ।
आनन्दस्तस्य तेनैव मन्दस्त्वरितमेव हा ॥३२॥

प्राड्विवाको नृसिंहोसावद्य कीलितवागहो ।
व्याकुलीभवति प्राज्यं जलाद्भीत इवाण्डजः ॥३३॥

श्रृणोमि हन्त मोती सा मुह्यत्यद्य मुहुर्मुहुः ।
हा कलागुरुदेवेति ब्रुवाणाश्रुपरा तथा ॥३४॥

दूरीभूयापि सोढ्वापि दण्डं सा नाथ कम्पते ।
तां त्वद्वियोगकम्पोयं ह्यनाथीकुरुते सदा ॥३५॥

शक्नोति भवितुं हन्त खुदाबक्शो न जीवितः ।
त्वय्येवास्त्यनुरक्तोलं निगृहीतोपि स ह्यहो ॥३६॥

जूह्याश्चरणयोराप्तं कम्पनृत्यमनन्तताम् ।
चाटुभिर्या शतेनापि नानृत्यत् सुभगा क्वचित् ॥३७॥

उत्फुल्लो भविता को नु प्रशंसन् रिष्टिमद्य मे ।
इति ब्रुवन् महातापं रघुनाथोयतेनिशम् ॥३८॥

श्रीजवाहरसिंहोयमोजसासह्यतां गतः ।
सह्यो जातो महामेघमालाच्छन्न इवोष्णभः ॥३९॥

रोदित्येष द्विजस्ताल्याशिछन्नत्वज्जन्मपत्रिकः ।
दुर्गैषा रोदिति स्वामिन् मुक्तकण्ठं तपस्विनी ॥४०॥

पराङ्मुखः सवार्यक्षस्तान्तोस्त्येषोद्य वख्शिशः ।
दुर्गद्वारेश्रुभिः शोकं लिखन्नास्ते व्यथाप्लुतः ॥४१॥

पूरनो नखरैर्भूमिं खनन्नस्ति विषादवान् ।
कण्ठो नासाद्दशी सर्वे नेत्रवारिवशंवदाः ॥४२॥

स्नुषेयमिति यस्त्वं तामूचे तत्र दिने प्रभो ।
तत्स्मृत्वा झलकारीयं शिरस्ताडेन रोदिति ॥४३॥

भाऊरुत्तिष्ठति श्रीमान् वाटे दीनोश्रु पातयन् ।
भान्ति मौक्तिकवत्पीनाः पाटले यस्य बिन्दवः ॥४४॥

परासुतां गते तातेप्यरोदीद्यो न धैर्यवान् ।
आक्रन्दति जमाः सोद्य भूप भूपेति हा भृशम् ॥४५॥

तरलाक्षो वजीरोयं संयमे हिमवानिव ।
अमीरश्चास्त्यधीरोसौ धृत्या महिमवानिह ॥४६॥

ताडयत्युर उद्दामं काशीनाथोऽयि नाथ सः ।
उमेशोऽवपतत्येष मूर्च्छया धूलिधूसरः ॥४७॥

शोथो देशमुखस्यास्ये रोदनेन दृशोः परः ।
मुखाब्जे रामचन्द्रस्य यासीद् भास्तं जगाम सा ॥४८॥

लालता अश्रुखिन्नोऽयमिमामो भग्नलालसः ।
हा रामेति रुदन्नार्त्तं प्रोञ्छत्यश्रूणि दाउजूः ॥४९॥

उदासितास्ति गौसोदन्नखालिरिव केसरी ।
हन्त लक्ष्मणरावोऽयमाशालक्ष्म दधाति नो ॥५०॥

शोचत्यत्र परं धम्मी लालाश्यामश्च तत्र हा ।
गन्धी मगननामासौ श्यामो गगनसन्निभः ॥५१॥

स चुन्नो चौधरी दीर्णः परागवदनशाल्यहो ।
छन्दी च क्रोशति च्छिन्नधैर्यबन्धोऽसहायकः ॥५२॥

कीलालकसमं रक्तं चक्षुर्लाला विलापतः ।
मोती चैप चिनोत्यश्रुमुक्ताजालं समाहितम् ॥५३॥

श्यामोतीतं सुखं सर्वं स्मारं स्मारं विषादवान् ।
भविष्यच्चिन्तया बाँडेरथ श्रीनिर्धनाननः ॥५४॥

वख्शिशस्य कलत्रं तत् सचीत्कारं विमुह्यति ।
काशी भगिनिका चैषा शेषनेत्रजलोच्चयः ॥५५॥

सुन्दरी सुन्दरीशाद्य जाता हा कुररीसमा ।
मुन्दरीष्टे न पातारं भग्नपोता वराङ्गना ॥५६॥

पाणिना वेपमानेन पत्रमन्त्यं यदाददाः ।
करौ संज्ञाविहीनश्च प्रससारिथ नाथ हा ॥५७॥

क्षणः स मे स्मृतौ साश्रुरेलिसोऽप्यभवद् रिपुः ।
कारुण्यं निकषानार्द्रः को भवेदैहलौकिकः ॥५८॥

आर्यायास्तु रमायाः क्वाप्यपृच्छं चरितं यदा ।
विस्मरेयं पतन्तं त्वां तदा कृत्तमिव द्रुमम् ॥५९॥

कालेन्यत्र वदिष्यामीत्युक्त्वारौत्सीद् शोर्जलम् ।
तद्दाक्षिण्यमहो यत्र विलापोप्यहितायते ॥६०॥

स सिद्धवकसाख्योयं निःसहायो गजेश्वरः ।
रोदितीवाश्रि वक्त्रं हा यौष्माकीणं विलोकयन् ॥६१॥

लक्षाभिस् त्रिंशता रत्नस्वर्णाकल्पमकारयः ।
अमुष्यैव कृते तुष्टः स्वल्पमेव तदाप्यभूः ॥६२॥

असावेवाद्य वक्षो नो दारणे वर्त्तते रतः ।
कालक्रमत आनन्दोप्येति दुःखवशं वत ॥६३॥

सहस्रं तत्तुरङ्गाणां सौराष्ट्राणां महोदय ।
अद्य प्रभृति मां नित्यं गलदस्रां करिष्यति ॥६४॥

यदृच्छयापि हन्तोक्तः क्रीतवैव व्यरमः प्रिय ।
निर्वन्धानपि कः श्रोष्यत्यपि हा जीवनावधि ॥६५॥

रङ्गो रोदिति हन्ताद्य ग्रन्थागारं च रोदिति ।
रोदित्युर्वी नभो रोदित्यकूपारश्च रोदिति ॥६६॥

तत्पश्चात्सा रोदनक्षामकण्ठा घोरां मूर्च्छां प्राक् समासादयन्ती ।
वालापप्तद् भूमिपृष्ठे मुहूर्त्ताल्लेभे संज्ञां क्रोधरक्ताननाभूत् ॥६७॥

एकान्ते स्वमिचित्रं प्रति निहितदृशा सा प्रमत्ता जगाद
मर्त्तुं नेच्छामि कर्त्तुं वत वहलतरं मे विलोके समक्षम् ।
क्रान्तेर्व्याक्षिप्यते किं जनगणसुखदा योजना निर्मिता सा
लक्ष्मीरेषा कदापि प्रविचलति पदं वुद्बुदध्वंसतो नो ॥६८॥

संसारे जीवनं तु प्रतिदिवसमिदं लीयते वुद्बुदाभं
लीनत्वं ह्यस्य धर्मः कथमपि न कथा विस्मयोत्पादिकेयम् ।
सोढव्याः सन्ति गोलाः कलितशिखिचयास्ते शतघ्नीप्रसूताः
किं तन्नानाविलापैर्न सहनकरणात्कश्चनर्तेस्ति पन्थाः ॥६९॥

न नयतु परिरम्भाविघ्नतां तत्र रम्भा
यदसि खलु वशी तन् मोर्वशी भूद् वशीकृत् ।
छविमट न तिलादेरुत्तमामुत्तमाया
असि यत इतिहेतोर्वच्मि मा मुञ्च धैर्यम् ॥७०॥

तपतौ मध्याह्नेहमसिशिखिभिः साकमुदिता
यमातिथ्यं दास्याम्यशितितनवे तूर्णमस्ये ।
प्रतापीयं तापं ददुपरि तीव्रं तु रवये
ज्वलन्नह्निं तेन प्रवल वमयिष्यस्यतितराम् ॥७१॥

इत्युक्त्वार्त्ता गीतातत्त्वे
लीनस्वान्ता जाताकस्मात् ।
तत्पश्चात् सा राज्ञः पत्नी
शान्ता भूता सीमाहीना ।७२॥

• • •

## सर्ग एकादशः

चिन्तासमूहः प्रसभं महेश्वरीं क्षयप्रभं क्षाययति स्म सर्वदा ।
आरोहणार्थं ज्वलितेव सञ्चिता सोभर्तृ कायाः कृत आजगाम हा ॥१॥

परोपकारे च परेशपूजने बभूव तज्जीवनमर्पितं सदा ।
सुप्ता स्वराष्ट्रार्थमजागरीत्तथा क्षणे क्षणे राष्ट्रदशामचिन्तयत् ॥२॥

प्रायेण निद्राङ्कमुपेयुषी शुभा मुष्टिं स्वकीयां सुदृढीचकार सा ।
गुरुण्ड कुण्डाधम रे क्व पामरेत्युवाह वक्त्रेण वचःप्रचण्डताम् ॥३॥

कात्यायनी सामितखिन्नमानसा स्वयं तपस्याभवदेकपावनी ।
बभाज भीतिं भवसागरस्य नो चकार यस्तां निजनेत्रगोचरम् ॥

प्रातश्च सायं च यदैव साभवत् कदापि पूजावसरेपि सक्षणा ।
तदैव लब्धावसरा विभीषणा बभूव चिन्ताभुजगी मनोगता ॥५॥

मूर्त्तिं भवान्या अबला यदाकरोत् पूजारता मानसपीठिकोपरि ।
तदा विचारप्रसरो नवो गतः सत्तां तदीयां सहसा न्यवारयत् ॥६॥

ततश्च तस्या उपरि प्रभाच्युतं व्यरीरचद् भारतभूप्रसूमुखम् ।
खिन्नं च चिन्तानिवहेन पीतभं वज्राहतं चाकुलभावसूचकम् ॥७॥

अथ क्षणेनावयवावलिः समा स्फुटत्वमाप्ता परिधाननिर्धना ।
पेतुर्विसेरुर्वत चूर्णकुन्तला यत्राश्रु चक्षार महाप्रपातवत् ॥८॥

विलोचनाभ्यामपि शोकवारिधेर्वारिप्रवाहोविरलत्वमाप्तवान् ।
इयेष दुःस्वप्नसमाप्तदेश्वरी तद्दृश्यजातस्मरणाद् विरक्तताम् ॥९॥

यथा यथा विस्मरणे रताभवत्तथा तथा सोग्रगतेन कल्पना ।
विवेश गम्भीरतरं मनोभयं तत्रैव भेजे स्थितिमप्यनारतम् ॥१०॥

तदा व्यथा देहवती चिचिन्त सा चिन्ता समस्तास्ति मम प्रमत्तता ।
आलस्यजन्योस्त्यवसाद एषको मदीयचित्तेशमतां तनोत्यलम् ॥११॥

प्रवर्त्स्यतीहाजिरसेरसिव्रजैर्भविष्यति श्रोत्रकुदेकघट्टनम् ।
म्रियेत सा मानवतेत्थमन्यथा भवेदनेन प्रशमेन किं तदा ॥१२॥

विशस्यते गोव्रज उत्तरोत्तरं तल्लोहितं स्यन्दत एकवेगतः ।
तस्यैव पुष्टिं रुधिरं द्वशोरिदं करोति हा हाविरतं वहत्परम् ॥१३॥

यो ब्राह्मणः संयमबद्धमानसः सदैव सन्तोषपरायणः परम् ।
परोपकारस्य विचिन्तनं तथा करोति सोढ्वापि परार्थहीनताम् ॥१४॥

स एव हन्ताद्य तिरस्कृतेर्भयान्महावसादं सततं भजत्यलम् ।
यूथात्स्वकाद् भ्रष्ट इव द्विपेश्वरो मत्या विमुक्तः सहते महापदम् ॥१५॥

लज्जापि सा सम्प्रति लुण्ठ्यते न नः सुतावधूनामरिणाततायिना ।
कल्पान्तवेलापि समागमिष्यति प्रचण्डतात्मा झगितीति लक्ष्यते ॥१६॥

कृषीवलानां वसुधा कियच्चिरं भवत्यखण्डेति न वेद्यते मनाक् ।
आशङ्कया जर्जरमानसा अहो राष्ट्रेत्र लोका इति दृश्यतेधुना ॥१७॥

योहः समग्रं कुरुते श्रमं परं क्षेत्रेषु वाटेषु हुतस्वजीवनम् ।
भुञ्जीत हा नोदरपूरमात्मनोप्यहो स शस्यानि रिपोर्विधानतः ॥१८॥

गुरुण्डजातेरघजातमुत्कटं तामेव खादेदघिनीमसंशयम् ॥
तन्निर्मितं दुर्णयचक्रमुज्ज्वलत्तामेव कण्ठे प्रहरेदिति ध्रुवम् ॥१९॥

शतं व्रणान् पञ्चनदाः प्रदर्शयन्त्यास्फोटपीडामथितानहो स्वकान् ।
प्रदीपतः सद्मन एव तत्र हा भवत्यनल्पाग्निशिखालिताण्डवम् ॥२०॥

ये मध्यदेशीयभटा रिपोः कृते व्रणान्यमुष्यैव महान्ति लेभिरे ।
कुर्वन्त आजिं विगणय्य स्वानसूंस्तैरुद्भटैः पाञ्चनदैर्भटैः परैः ॥२१॥

अरिः सितः पञ्चनदाहितानिति प्रवच्य तानेव जयोपकारिणः ।
निन्दत्यघी तेषु जितेषु युद्धयते कथं महाकूटयुतं सुरक्षितः ॥२२॥

अत्यार्जवस्यर्जुवरायि भारत प्रभुर्विमोक्षाय सुदेश नो भवेः ।
सारल्यमस्त्येकमलङ्कृतिर्वरं कौटिल्यमप्यङ्ग भवेत्सहैव नो ॥२३॥

कौटिल्यहीनस्त्वमहो अहीन चेद्वीरो भवेः किः कुटिलस्य बोधवन् ।
सारल्यमुच्चं सरलेषु केवलं कौटिल्यमेकं कुटिलेषु साम्प्रतम् ॥२४॥

जानीहि तत्त्वं कुटिलोधिमेदिनि ज्यायान् बलीयान् सरलाज्जनात्सदा ।
रेखापि वक्राव्यभिचारि सर्जुतो द्राघीयसी सम्भवतीति दृश्यते ॥२५॥

अये कुरुक्षेत्र महारणात्प्रभृत्येवं भविष्यस्यथ धर्ममेदिनी ।
प्रशान्तिमित्थं क्वचनापि लप्स्यसे न किं भविष्यस्ययि कर्ममेदिनी ॥२६॥

न रोचते ते परमङ्ग कौतुकं शरावलेः खड्गचयस्य किं रमम् ।
स्मरस्यहो नो धनुषोर्जुनस्य किं फूत्कारतुल्यो निनदो महत्तमः ॥२७॥

भीमस्य सा हन्त भयङ्करी गदा नो मस्तके ते ध्वनिमातनोति किम् ।
सा पाञ्चजन्यस्य महोत्कटा च किं लीला न संपूरयति श्रुतिं तव ॥२८॥

हल्दीमुखे घाटि तवाद्य रूपं वैधव्यमेवैकमहो भविष्यति ।
सुषुप्त एवैवमथ प्रतापवान् राणाप्रतापो भविता च हन्त किम् ॥२९॥

भागीरथि क्व च्छविरस्ति ते रमा भगीरथीयस्य हसः श्रमस्य सः ।
अद्यत्व एतत् तव वक्त्रपङ्कजं किं लक्ष्यते शोषमुपेयिवः परम् ॥३०॥

स वंशिकाच्छिद्रविनिर्गतो गतः क्व तानसङ्घो व्रजवल्लभस्य हा ।
साक्षादसि त्वं खलु सूर्यकन्यके सुविश्लथत्वं सुजनस्य मौनिनः ॥३१॥

अवाप्य तत्पौरुषमीदृशं तथा कलेवरं कर्कशताकरं वरम् ।
नपुंसकाभस्तनुमात्रजीवितो भवस्यहो किं हिमवन् नगेश्वर ॥३२॥

खलस्य भङ्ध्याशु खलत्वमुद्धुरं दुःसाहसं नाशय तस्य पूर्णतः ।
दुःखानि सञ्चूर्णय भारतस्य भोर्व्यावर्त्तयाकर्मण इद्धमुन्नतम् ॥३३॥

अयीन्दिरामन्दिर नारविन्द किं त्वमप्यदभ्रं भवितासि हासवत् ।
हर्त्तासि लक्ष्म्या निजया जने जने मालिन्यमेतत् किमखर्वभूति नो ॥३४॥

त्यजावसादं धरणे जनन्यमुं गोधूममुत्पादय तादृशं नवम् ।
प्रवाहयेत्कान्त्यस्रगिद्धकान्ति यः शिरासु कुर्यादथ नः सुधातुलान् ॥३५॥

इति कथयित्वाधरोधिपाया
जातः पूर्णो नव्यरूपभासः ।
गूढो भावो जहास कश्चिद्
वदने चिन्ता चूर्णिता समस्ता ॥३६॥

• • •

## सर्गो द्वादशः

राज्ञ्येकदा गतरवोपविवेश गेहे दासीतती तनुमती रवहीनताग्रे।
रेखागणो मुखशशिन्युदियाय चिन्तासंसूचको ग्रसनलग्न इवेन्दुशत्रुः ॥१॥

ऊचे वचांस्यवनिपालकलत्रमेवं वखशोऽपि हन्त जिततां गतवान् खुदादिः।
श्रीनिर्धनोऽभवदहो अधुनातिवीरः श्रीतोतिधीर उदगाच्च्युततां बलेशः ॥ ॥

शूरः स केवलमसिं स्वकरे निधाय शस्त्रास्त्रसंहतिमुदीर्णशिखां रुणद्धि।
दानावगाढकरटातिभयङ्करेण संघट्टते करटिनापि मृगेन्द्रवद् यः ॥३॥

तद्दस्युना स पृतनेश्वर एककेन हा दुर्दिनेऽभिभवमाप महोग्रमस्मिन्।
चण्डातपस्य विकटामवमत्य दीप्तिं मध्यन्दिने समुदियाय क एष तारः ॥४॥

नो सागराभिध उपैन्न स सागरत्वं हस्ती स मज्जति विषीदति तत्र वखशः।
किं वर्त्तते पुरि न कश्चिदहो अगस्त्यः पातुं तमाशु समुदैत्क्षमतायुतं यः ॥५॥

मन्ये तथापि विफलं न कृतं मदीयं यत्प्रैषयं समरवातुलमेकवीरम्।
योऽशिक्षयद् बहुतरं व्रणवानपीत्थं योद्धुं प्रवृत्तमचिरेण महाधमं तम् ॥६॥

द्रक्ष्यामि तावदहमेव महाखलं स्त्रीत्येकाकिनीति च बिभेमि कदापि नाहम्।
आलोकयायुरवशिष्टमुत प्रणष्टं रेऽशिष्ट तावकमिहास्ति वसुन्धरायाम् ॥७॥

तत्पाण्डवस्य वरभुव्यलभेत्र जन्म क्षेत्रे रणस्य दृढ एकक एव गत्वा।
यो गोकुलम्भरततेः प्रददौ शताय मालिन्यकारि यशसामभिभूतमेकम् ॥८॥

तं पौरवं प्रचुरपौरुषकोषमेकं सुष्ठु स्मरामि भरतावनिभूषणं सः।
दृष्ट्वापि सैन्यनिचयं निहतं विदारे यस्तस्य विश्वजयिनः पुर उन्नतोऽभूत् ॥९॥

झालाप्रतापशिवराजमुखस्य वीरव्यूहस्य तु प्रथितमस्ति यशो नवीनम्।
तस्याधुनापि समरैकरसेन सर्वाः सौरभ्यसारलसिता भरताचलाशाः ॥१०॥

भीमोऽस्ति मे स्मरणगोचर एकभीमस्तत्क्षेपणं च बहुभीतिकरं रथानाम् ।
द्रोणस्य तां विपदमुग्रकृते त्वयाहं संस्मारये बत विलोकय तिष्ठ तिष्ठ ॥११॥

मुन्दस्त्वमाह किमहो ऋतुराप वर्षा ब्रूहि त्वमेव किमनेन भयाधनायाः ।
श्रेष्ठे भगिन्ययि बिभेषि न रोगितायाः अत्रैव तिष्ठ भजते भयमन्तरं चेत् ॥१२॥

नूनं भविष्यति रघुप्रवरः सहायो यत्संज्ञया जलनिधावपि सेतुरस्थात् ।
ततु शिला अपि बभूवुरलं पयःसु धन्यं यदीयचरितं पुरुषत्ववेश्म ॥१३॥

सज्जीकरोतु हयमाशुतरं नियन्ता वक्षस्यरिं दलतु यः क्षुरपातघातैः ।
वीभूयतां रणवने प्लवनृत्यलग्नः सोयं वने च सुशिखः प्लवगश्च मत्तः ॥१४॥

नृत्यत्वरेरुरसि तीक्ष्णतरं कृपाणो दक्षो यमः शिरसि नृत्यतु दुर्दमत्वे ।
झाँसी पुरी तदनु नृत्यतु मुक्तदेहा नृत्यं भवत्वनुपमं भवरङ्गभूमौ ॥१५॥

त्वं सागरोसि यदि दस्युपते प्रचण्डो धक्ष्यामि वाडव इवाग्निरहं सुरौद्रा ।
सिंहोसि चेदधम लुण्ठक भक्षयिष्याम्यष्टाङ्घ्रिवद् हि रुधिरं प्रति साभिलाषा ॥१६॥

जातोधुना स कुँवरः कवलो मदीयो भोक्ष्ये क्षणेन करुणा विरहय्य सा तम् ।
नीचेश्वरोस्ति महिपासुरतां प्रपन्नस्तस्मै फलं समुचितं गिरिजा प्रदास्ये ॥१७॥

मेघाधुना स्तनितकैतवमाकलय्य कं भाययस्यलमयोघनताडनेन ।
कस्मिंस्तथा हसितुमङ्ग समाप्तवीर्यें सज्जीकरोषि बत पौरुषहट्टमेतत् ॥१८॥

भो इन्द्र खाण्डवदवस्य न घोरवर्षा दग्धस्य विस्मरसि किञ्चिदपि प्रचण्डाः ।
यद्यप्यहो स्मरसि नाभिभवं त्वयाप्तं यो मानवेन बहुशोप्यवरुद्धवेगः ॥१९॥

श्यामैर्घनैर्बहुतरैः सहितं पराप्तः श्यामः सहायरहितोस्ति भुवीति पश्यन् ।
संप्राप्तवांस्त्वममितामवमाननां यद् गोवर्धने तदपि विस्मरसि प्रकामम् ॥२०॥

एषाधुनापि न हि रक्षकनिर्धनास्ति क्षौणी सुरेन्द्र भरतस्य भयं प्रयायत् ।
अद्यावधीदमवलोकितमस्ति नो यच्छिक्षा ददीत नरता न सुपर्वतायै ॥२१॥

मद्वीरतास्त्रनिचयेन पराजितास्ते धारास्त्वमा निशितमार्गणसंहतीनाम् ।
पश्यायमप्यफल एव तव प्रयत्नः पूर्वं यथाभवदसीमविमानमूलम् ॥२२॥

भिद्यादयोमयपरश्वध आशु काष्ठं किं प्रस्तरेऽपि भवति क्षमता तदीया ।
यो भीततां भजति सैव वशंवदः स्याद् यो निर्भयो भवति का वशिता तदीया ॥२३॥

इत्थं वचः सुवदना सुदृढं वदन्ती सारुह्य वाहमगमद् बहिरिन्दिराभा ।
नृत्यं प्रदर्शयितुमाशु सखीजनानां खड्गो बभूव चपलो विवरान्निरेतुम् ॥२४॥

अग्रे दिदेव बहुलं क्षितिपालपत्नी दासीद्वयी सदृशरूपशिखा च पृष्ठे ।
कल्याणदाननिरतेव वसुन्धरां प्रत्यग्नित्रयी वितनुते स्म विकस्वराभाम् ॥२५॥

सा वेत्रवत्युपगता निमिषेण दृष्टिमारादहश्यत तटं नवथाभयेद्धम् ।
तद्रामणीयकमथो पुरतोवलोक्य दीप्रावतीर्य हयतश्चलिता पदाभ्याम् ॥२६॥

सख्यावपि द्रुतमनुव्रजिते पदाभ्यां सा संहतिः सरितमन्वकरोत्प्रकामम् ।
खड्गोर्मिभिश्च तनुसंभृतदीप्तिधारावृन्दैश्च वक्त्रजलजैश्च परं प्रकाशा ॥२७॥

भीष्मा घनाघनभटाः सहसैव तत्र व्यापुर्नभःस्थलमुदग्रतमं पतन्तः ।
पश्चाद् गताः पुनरपि प्रययुस्तथाग्रे सक्ता मिथः क्वचिदतिस्थिरतामवापुः ॥२८॥

उत्पाटयन्ति हृदयं बहुवेगयुक्तं शम्पायुधानि बहलं स्फुरणं वितेनुः ।
ध्वाना इव श्रुतिमुपेयुरमुं वधान जह्याशु तं गडगडायिततः प्रकामम् ॥२९॥

धाराशुगावलिरुदैद्धितता समन्तादापेन्द्रगोपरुधिरं वहदाशुवेगम् ।
वैरी बभूव गगनं धरणीतलस्य ब्रह्माण्डमण्डलमभूद्रणभूस्वरूपम् ॥३०॥

दृष्ट्वाक्रमं सपदि वेत्रवती तु भूम्या आप्तेव कोपममितं प्रकटीचकार ।
तस्या बभूव भृकुटी लहरीमिषेण बद्धा रणे सरतिता स्तनितच्छलेन ॥३१॥

आवर्त्तघातसमुदायमदर्शयत्सा कल्लोलविक्रममथोच्चतमं ततान ।
तीरप्रहारमदितां च तदुत्थरावनिर्भर्त्सनामविरलं प्रकटीचकार ॥३२॥

आलोक्य तां भयमयीं नृपपत्न्यवस्थां तस्थौ विचारनिरता निमिषद्वयं सा ।
स्तब्धौबभूवतुरुदीर्णभये अकस्मात्सख्यौ तु चित्रमवलोक्य विचित्रमेतत् ॥३३॥

निर्भीकतां प्रददती हृदयाय सख्योरुचेभयं झगिति झाँस्यधिदेवता सा ।
ओजस्विना पदगणेन निजेन वर्त्मन्योजोरसायनमसीमगुणं किरन्ती ॥३४॥

शक्रोऽपि चेदभिपतेत्तरसा सवज्रो युक्तं तदापि चलनं किमये स्वसारौ ।
स्थायी यदा कतिपयानि दिनानि लोकः किं जीवनं मरणमस्ति तदाऽस्मदीयम् ॥३५॥

वात्या यदि भ्रमति मार्गगता न चिन्ता ग्रावा यदि प्रपतति प्रथितं न चिन्ता ।
चिन्ता न यद्यतितरां चपलोर्मिसज्जा निर्बन्धमुज्झति न वेत्रवती सुपीनम् ॥३६॥

नौवाहका अनुभवन्ति यदासुभीतिं याने स्वयं न समया तटमेति नौका ।
अम्भोधरश्च सततं स्तननेऽस्ति लग्नो माता स्वयं प्रकृतिरस्ति विघातशीला ॥३७॥

दिष्ट्ये तदैव पतति प्रसभं सुभीमे लोकस्य साहसमथो धृतिरत्र नूनम् ।
तत्पातयेम सलिले निजदेहमाशु कालो न वर्त्तत उदीक्षितुमद्य शेषः ॥३८॥

इत्थं वदन्त्यवनिपा सलिले पपात जम्भस्य भास्करसुतस्य तरङ्गवत्याः ।
मत्ता रसातलमयुर्गजराजमुख्या भूतस्तथा सलिलविप्लव ईतिरौद्रः ॥३९॥

तत्रापि वृष्टिकरकानिवहेन सर्वे क्लिन्नाः पटाः शिशिरता व्यसरच्छरीरे ।
वाराणि लक्षमथ देहलता चकम्प आनञ्च रोमविततिर्हृदयार्त्तिकर्त्री ॥४०॥

अन्वेव सैन्धवमिलापतियोपितायाः सास्फालशब्दमपतद्युगलं हयस्य ।
आविर्बभूव धवला सलिलेषु रेखा सर्वं तदाभिनयसन्निभमाबभौ तत् ॥४१॥

हिल्लोलसंहतिरमज्जयदाशिरस्कं कर्णाननादिकरणं जलहासमाप ।
उत्पुप्लुवे जलचयस्तलतः प्रकामं झाङ्कृत्य निर्झरशतं क्षरति स्म वाढम् ॥४२॥

दुद्राव तक्षक इवोर्मिगणोऽश्वसङ्घो दुद्राव शीघ्रमनु तक्षकभक्षकाभः ।
दुद्राव भूपतिकलत्रमथ प्रजानां संरक्षकोपममसूंश्च पणीचकार ॥४३॥

सा स्वामिनी निरुपमां प्रतिभामुपेता स्मृत्वा नियोज्यनिहतिं श्रममन्वभून्नो ।
विघ्नं विलम्बमवलोक्य प्रजाहिते द्राग् जज्वाल तत्र कणिका कणिका दिदीपे ॥४४॥

पारं जगाम सबला रुरुधे च वृष्टिः किञ्चित् स्मितं गतरसोऽलभताधरोऽपि ।
साफल्यमर्पयति जीवनसत्त्वमाशु सर्वस्य पीडनजुषे करणव्रजाय ॥४५॥

स्थित्वा क्षणं धृतवती वसनान्तराणि मेघान् क्षणं लघुतराननयद् दृगब्जम् ।
यस्ताः क्षणं च हरितासु मनोहयोऽपि रागं दधार तृणराजिषु दृष्टिगासु ॥४६॥

भ्रातुः क्षणं च शिखरस्य विधीयमानमालिङ्गनं जलधरेण ददर्श रम्यम् ।
तत्साहसं रिपुयमस्य सिकन्दरस्य स्मृत्वा तनौ पुलकमम्बरमाततान ॥४७॥

पप्रच्छ तत्र जनतां जनपालयित्री दृष्टः क्व सागर इति प्रवदेत भद्राः ।
ग्रामीणसंहतिरवागमदाशु तथ्यं नैवं वराकमयं बहुकान्त्यवेक्ष्य ॥४८॥

एकेऽगदन् स गतवान् दिशि तत्र नूनमन्येऽवदन् स इत एव जगाम सद्यः ।
केचित्तथोचिरं उदीर्णबलः क्व यातीत्यद्यावधि प्रभवति स्म न कोपि वेत्तुम् ॥४९॥

विश्राम्यतां क्षणमपह्नियतां तृषा च श्रान्त्यास्ति हन्त भवती श्लथदेहशक्तिः ।
यो गोचरो भवति नो क्वचिदाशुगस्याप्यन्वेषणं विफलमेव तदीयमीशे ॥५०॥

ऊहाञ्चकार सकलं निजगाद चेत्थं किं विश्रमेण मम सङ्कटगर्हितेन ।
इच्छा न तस्य यदि वेदयितुं प्रवृत्तिं हानिर्न तन्मम भवामि निबद्धमध्या ॥५१॥

एवं निगद्य शरतुल्यमपप्तदेषा छायामिवालभत लोकसमूहलं तत् ।
पश्यन्ति लोचनयुगानि निशम्य यावत् तावद् हयोविषयतां स जगाम दृष्टेः ॥५२॥

वक्षसस्य तामतितरामनुभूय पीडां स्थातुं शशाक क्षणमप्यधिपा न मध्ये ।
अश्वं स्वतन्त्रमकरोत्पतनाय नाके स्वःस्त्र्याभमस्य शिविरे व्रणिनोवतीर्णा ॥५३॥

यातं क्षणं नयनगोचरतामनैषीदाश्वासनं क्षणमुपायनमप्ययच्छत् ।
दस्योः क्षणं श्रुतवती च जगाद चैवं गच्छामि मे गुरुतरं खलु कार्यमस्ति ॥५४॥

मुक्तेव किञ्चन दृशोः क्षतिनोस्य तस्थौ तद्रक्षितुं पिहितवानचिरोदयं ते ।
यावन्न लोचनयुगान्तरिता नृपस्त्री तावन्निमेषरहितामकरोच्च दृष्टिम् ॥५५॥

श्रीमुन्दरा प्रचलिताश्वनुगम्यमाना मोतीं विसृज्य पृतनापतिसान्त्वनायै ।
क्रोशान् दशावहदहो हरिणोह्यमाना साह्नाय चाप खिसनीमधिपा सुरस्याम् ॥५६॥

राज्ञी द्रुतं परमसाहसिकं पराप्तुं तत्कानने मृगयते स्म कणं कणं सा ।
चस्खाल पिच्छिलपथे बहुशो हयोस्य सक्ताः शफा न रुरुधे धृतलोकचिन्ता ॥५७॥

दस्युव्रजस्तु प्रलयङ्करकर्मशीलो गोपायितात्मतनु गुल्मचयेषु तस्थौ ।
प्राणान्नयामि बत सम्प्रति रक्षणार्थं क्वेत्याकलय्य सकलो मथितो बभूव ॥५८॥

अत्रान्तरे कथितवानतितारमेको राज्ञ्यागता निकटमेव विलोकयाहो ।
तूर्णं द्रव द्रव सखे मम सा हि चण्डी खड्गान् विलोकय विलोकय धावनोत्कान् ॥५९॥

श्रुत्वैव भूमिपतिपत्न्यभिधाक्षराणि सर्वः स दस्युनिकरोऽभजतातिभीतिम् ।
लोके सदा मरणनिश्चिततता हि तूर्णं वीराग्रगण्यमपि कर्षति विह्वलत्वम् ॥६०॥

गूढं गतागतमथास्य निरीक्षमाणा दस्युव्रजस्य पथदर्शकमन्वियेष ।
दुर्दान्तकर्मनिरतं जनपीडकं तं स्वप्रेषितं प्रतिनिधिं प्रति वीर्यवन्तम् ॥६१॥

तत्रान्तरे नयनगोचरतामुपेतो मन्दातपे कनकभूषणभाविशेषः ।
राज्ञी बभूव सफला स्वक एव नाथं लङ्कां विभीषण इवानयत स्वकीयम् ॥६२॥

शीघ्रं यथायतनमीश्वरयोषिता सा तं पार्ष्णिनैरयत सैन्धववंशमुख्यम् ।
प्राप्नोच्च दस्युदलनेतुरुदात्तमश्वं कौक्षेयकं यमकटाक्षसमं वहन्ती ॥६३॥

दस्युस्तु मुन्दरमुपैतुमलं बभूव व्यावृत्य तावदवधानसुरक्षितात्मा ।
खड्गं न्यपातयत मुन्दरमुं परं तु स्वेनासिना कृतवती विफलप्रयासम् ॥६४॥

यावत्स सागर उपैति खलेश्वराग्रे मुन्दः प्रहारशतमुक्ततनुः कथञ्चित् ।
तावच्छुभागमदरुद्ध महाहयं स्वं दस्योर्हयस्य निकटे स्थिरतामनैषीत् ॥६५॥

उत्थापितं च करपालमताडयत्सा दस्योर्निजेन विजयेन परं दृढेन ।
चित्रं चकार च खलेश्वरचन्द्रहासमग्रेण चुम्बितधरं छुरिकासमानम् ॥६६॥

मध्ये निधाय सपदि स्वकरौ खलं तं विद्युत्समं कृतवती विफलप्रयत्नम् ।
मुन्दस्तथान्यत उपेत्य बबन्ध गाढं तं वज्रपाशमनुकृत्य जनेशपत्न्याः ॥६७॥

घोटः पलायत महाकुलतां दधानस्तस्यैन्द्रजालिकविमुग्ध इव प्रकामम् ।
निस्तब्धतां स्म लभते विहितार्त्तनादं चिल्लाभसंहतिपतिर्भयविह्वलात्मा ॥६८॥

दुःस्वप्नसङ्ग्रह इवैकविचित्रकर्मा वैवश्यनारकममुष्य हृदे प्रदाय ।
सर्वं बभञ्ज तनुकीकसजालमुग्रं चक्रारपङ्क्तिधृतहस्तकरादिकाङ्गः ॥६९॥

पश्चाच्च माचलमलं पदहस्तयोर्द्राग् रज्ज्वा बबन्ध विवशीकृतसर्ववृत्ति ।
आहूतवत्यनुचरानटवीनियुक्तानाध्मातकाहलमथाधममाशु निन्ये ॥७०॥

रामायणीव सदने सदने तदीया चर्चोज्ज्वलानुरसिता धृतभक्तिभावे ।
आतङ्कितो निवसथो ददृशे स सर्वो दस्युः स कीलित इवाहितरो बभूव ॥७१॥

राज्ञी जगाद तव नाम किमस्ति बन्दिन् नूचे कुमारमनु सागर उद्धुरः सः ।
ब्रूते स्म सा पुनरहो त्रपसे न किञ्चित् संज्ञा कुमार इति कुत्र कृतिश्च कुत्र ॥७२॥

उक्तः स बन्धनगतस्तु महाभयेत्थं दृष्टिर्निनाय नततां त्रपया महत्या ।
ऊचे चिरात्कथमहो कथयेय सर्वं प्रत्येष्यतीह भवती क्षितिपालपत्नि ॥७३॥

वैदेशिकाः प्रतिदिनं दलयन्ति घोरं कुर्याम लुण्ठनमिदं न किमात्तकोपाः ।
सेवामहै सुरभिवृन्दविलोपलग्नान् प्रायोऽस्त्यतो वरमिदं कृतमप्युदात्ते ॥७४॥

सामन्तराजतिलका मम पूर्वजास्ते युद्धश्रियः प्रियतमाः सततं य आसन् ।
सेनौरछानरपते रचिता बभौ यैर्जज्ञे न ये परिभवं च पराङ्मुखत्वम् ॥७५॥

ये छत्रसाल उदिते नृपराजिराजे तत्सादसून्नमितहर्षभरेण चक्रुः ।
तेषां हि सन्ततिरपि प्रणतो भवेयं सोऽहं कथं सिततनु शितिचित्तवृत्तिम् ॥७६॥

तस्माद्वरं गरलभक्षणमाशु कृत्वानुन्मीलनाय निजमक्षि निमीलयामि ।
धिक्तान् धिगस्तु मनसापि वहन्ति लोका ये वैतसीमधमतालसितां प्रवृत्तिम् ॥७७॥

देहि द्रुतं मृतिमये शुभदर्शने मे बन्धोऽस्ति दुःसहतरो मम सर्वथायम् ।
अप्याप्नुयात्क्षितितले कणिकामपीह सौख्यस्य बन्धनगतं वय आटवेयम् ॥७८॥

उद्बन्धनेन तु कृतं मरणं समीहे मद्वंशजेन सममेत्र सदायुधाल्या ।
मृत्युर्ह्यनायुधकृतो मम मानहानिः कुप्येन्निशम्य सहकृत्वरसंहतिस्ते ॥७९॥

घोरेण विप्लवभयेन नृपे तदूर्ध्वं सर्वा पुरी विमथिता भविता सुशीघ्रम् ।
त्रुट्यन्तु नाम सकला अपि ते नमेयू रात्रिन्दिवं परमयन्त्रणयापि नेति ॥८०॥

ऊचेतिभा नखविभावृतपार्श्वभूमिर्मुक्तिं ददामि यदि सागर दस्युराज ।
कार्यं करिष्यसि किमन्यदतः परं त्वं कौतूहलं मम शमं गमयाविलम्बम् ॥८१॥

ओजस्वि दस्युगणपालक आश्ववादीद् दस्युत्वमेव भविता मम कृत्यमेकम् ।
नेष्यामि भूमिमसुदाधिकृतां परं तु त्रासं तथैव विपदं क्वचनापि नेति ॥८२॥

तन्निर्घृणं यदि वदामि तदा वृणोषि किं मृत्युमेव हितबन्धुवियोगभाजम् ।
कृत्यान्तरं किमपि वास्ति मनीषितं ते सम्पादयिष्यसि यतो निजलोकयात्राम् ॥८३॥

दासो भविष्यति तदा प्रणतो जनोयं देव्या महामहिमताविलसत्कृतायाः ।
हा किं त्वियन्ति दिवसानि पराप्तदस्युभावो विलोकयति भाजनतां न नैजीम् ॥८४॥

लुण्ठाकवक्त्रत इतानि वचांसि तानि श्रुत्वानघाच्च सरलाद् हृद उत्थितानि ।
तस्याः सदा पतितपावनचित्तवृत्ते राज्ञ्या बभौ विकसितं हृदयारविन्दम् ॥८५॥

एवं कुरुष्व बलमाप्नुहि मामकीनमद्यप्रभृत्यसि बलाधिकृतोभियुक्तः ।
योग्योसि न त्वयि कदाप्युपपद्यतेदो दस्युत्वकर्म भटनायक नीचताक्तम् ॥८६॥

आलोक्य मातुरिव तद्व्यवहारमक्ष्णोरैद्वारि निर्दयकृतेरपि सागरस्य ।
गोपाय्यमानमपि तत्सुभटेन राज्ञी जज्ञे जगाद रसपूरितवाक्ततिं सा ॥८७॥

त्वं स्वं कुमार इति यद्वदसे तथास्तु तत्त्वां कुमारपदभाजमहं करोमि ।
वक्ष्शोप्यसौ मम बलाधिकृतः कुमारोस्त्वद्य प्रभृत्युभयमेव सुहृत्त्वमेतु ॥८८॥

उत्पत्स्यते वसति वा नगरे मदीये यो वीरवृन्दमुकुटाभरणस्य हीरः ।
सोमुं कुमारपदवीं लभतामसुष्या लज्जावनाय भवतु प्रयतः सदैव ॥८९॥

स्वत्वं बलाद् हरतु ते जन आततायी यो नाम तं यमबलीकुरु वध्यमाशु ।
यच्चाटुकारकृतितोधिगमस्तदीयस्तच्छ्वानवृत्तिरिति लोक उदाहरन्ति ॥९०॥

याथार्थ्यतोस्यमितविक्रमशोभितस्त्वं झाँसीपुरे त्वमिव नौजसि कश्चनान्यः ।
मुक्तो भयेन विचर प्रहरिन् स्वदेशे धन्यीकुरुष्व नगरं च पृतश्च वीर ॥९१॥

देशो ह्ययं भटशिरोमणिनस्तवेव द्विट्सञ्चये विदधतः समरैकलीलाम् ।
शत्रुद्विपस्य गुरुतां नयतो लघुत्वं तत्कुम्भभित्तिमधिरोहत उद्धुरस्य ॥९२॥

त्वं रक्षको भव हरिर्विपिने स्वराष्ट्रे त्वद्रक्षकं भवतु वीर तदप्यमन्दम् ।
एवं सुरक्षिततनुर्भव तक्षको द्राग् लग्नः सपत्नजनमूषकभक्षकत्वे ॥९३॥

ऊचे स हे जननि मर्षय मर्षयास्ति दृग्गोचरोत्रभवतीति ममातिपुण्यम् ।
एतेन हन्त गरिमा ववृधे भवत्या भूत्वाप्यहं च विजितोमरताधिरूढः ॥९४॥

गोलेषु भीषणतरेष्वहसं शतघ्न्य श्चिक्रीड देवि गुलिकानिवहैर्भुशुण्ड्याः ।
निस्त्रिंशकुन्तविशिखाञ्शतशश्च सेहे वक्षस्यनागतभयं सहसा विमुच्य ॥९५॥

तोपस्तु तत्र भविता दिवसेर्चयिष्ये यत्रासुपद्मनिचयैः पदपङ्कजे ते ।
ज्ञास्यामि चाप्यवितथास्ति कुमारसञ्ज्ञा तत्रैव मे त्वदुपकारनवोद्भवस्य ॥९६॥

इत्युक्त्वा दर्शयित्वान्तर् हस्तामलकवत्स्वकम् ।
गम्भीरः सागरो जातोतलसागरसन्निभः ॥९७॥

केन प्रकारेण करोमि सङ्गे सहायकांस्तान् सकलान् स्वकीयान् ।
सैन्येन राज्ञ्या मिलितुं भवामि क्षमः सनाथो भवितुं निकामम् ॥९८॥

इत्थं विमृश्याथ परःशतेन सह स्वकीयैः सहकृत्वरैः सः ।
द्वाभ्यां दिनाभ्यामभवद् ध्वजिन्या लक्ष्म्याश्च तस्या अविभाज्यमङ्गम् ॥९९॥

आप्नोद् दस्युरपि श्रद्धा-
रत्नं यन्मूल्यवत् परम् ।
लभेत शतयत्नोपि
शतेनापि युगेन तत् ॥१००॥

• • •

## सर्गस्त्रयोदशः

शोकाम्बुधौ सा निममज्ज झाँसी क्षणं क्षणं हर्षणवारिधौ च।
जयो भवेदत्र पराजयो वेत्यभ्राम्यदन्तःकरणं समेषाम् ॥१॥

दुर्गं तदासीत्पविवत् कठोरं च्युता कदाचिद् दृढता न तस्य।
प्रमादशून्या अलसञ्जनास्ते सतर्कतापि क्वचिदस्वपीन्नो ॥२॥

या जन्मदात्री जननी स्वकीया दुग्धं न तस्या भविता सलज्जम्।
प्राणा अमी संशयगा भवेयुश्चिन्ता न मुक्त्यै भवितास्मि सज्जः ॥३॥

शिशुः शिशुः पुर्यद एव वाक्यं स्वरेण तारेण सदा बभाण।
उद्बन्धनात् किं मरणाच्चथैव लभ्येत पप्रच्छ जनः समस्तः ॥४॥

नासीदियत्ता विपदां तथापि तस्थुः प्रजास्ता अचलत्वशीलाः।
वारो मदीयः प्रथमो भवेदित्यैच्छन्मृतौ तत्र जनो जनोभीः ॥५॥

हताशतामण्वपि नैव दधाना सोत्साहमीशा द्विगुणं स्थिरासीत्।
अम्भोधिकल्लोलशतस्य दृप्ता समक्षमेकैव तटी व्यलासीत् ॥६॥

वहेत गोवर्धनधारिणः सा शक्तिर्गुरुं भारमिमं समस्तम्।
आदेशमात्रं परिपालनीयमस्माभिरन्यन्न विचारणीयम् ॥७॥

राजेश्वरी सा सकलस्य रक्षित्र्यपेक्षते नैव सहायतां नः।
एकापि योद्धुं प्रभवत्यरीणां समूहनेनेति जना अवोचन् ॥८॥

क्षणप्रभा सासुषु शात्रवाणां बभूव धारा विकटा निहन्त्री।
दीप्तिः स्वकानां सुखदा कृतेलं सञ्चारयन्ती नवजीवनत्वम् ॥९॥

जज्ञे न कश्चित्किमिति प्रकाममुत्कारिपक्षं बहुधेक्षते सा।
कनीनिके किं स्फुरतोतिमात्रं मुहुर्मुहुः प्राज्यतराशयेव ॥१०॥

ननर्त्त कीदृग् हसितं त्वदीयस्तदीय आस्ये सहसा मनोज्ञम् ।
आं ज्ञातप्रायाति सहायकोसौ तात्या भटो भाग्यमवाप्तसिद्धि ॥११॥

उवाद सा पास्यति शीघ्रमेव स्वातन्त्र्यपीयूषरसं पुरीयम् ।
ज्योतिर्नवीनं ज्वलयिष्यतीयं मुक्तिः समागच्छति पश्य पश्य ॥१२॥

सम्मानने तस्य भटाः शतघ्नीघोषान् कुरुध्वं शतसंख्यकान् द्राग् ।
राष्ट्रस्य सेनापतिरेष झांस्यै प्राणोपदामद्य वतानिनाय ॥१३॥

प्राणान् स ऐच्छोषयितुं रिपूणां तैरेव सम्पूरयितुं स्वदेहान् ।
कुर्यात्क्षणेनैव कृतिं परां तामन्यः शतेनापि न जन्मभिर्याम् ॥१४॥

व्यापादयिष्यत्यरिवृन्दमाशु शार्दूलराजो हरिणानिवासौ ।
मुखं क्षणेनैव विवर्णभावं तत्कैनिँगस्यैष्यति नात्र शङ्का ॥१५॥

आलोकयालोकय विन्धमस्य दर्पज्वरं नाशितवान् स पति ।
आलोकयालोकय हन्त नानामूर्त्तीर्द्धिगब्जेन दधान पति ॥१६॥

स पेशवाः सन् प्रणिधिर्बभूव प्रसार्य मृत्युं चरखार्यनीके ।
भास्वत्तनूजामुपकालपि द्राक्तीर्णः समायाति महामनस्वी ॥१७॥

स दुर्निवार्याभिनिवेशशाली क्षमः स शैलैरपि विग्रहीतुम् ।
पदे निवेश्याग्र उदीर्णशौर्यो भजेत भीतिं यमतोपि नो सः ॥१८॥

विदीर्णदानाम्बुधरेभराजः करोद्धतन्मस्तकमुक्तमुक्तः ।
स केसरीव द्रुतमेति घातं घातं रिपूँल्लब्धुमनल्पकीर्त्तिम् ॥१९॥

युष्माभिराकर्णितमस्ति नो किं कर्तुं विवस्त्रं द्विषतां समूहम् ।
व्यमुद्रयत्तच् चरखार्यधीशचक्रस्य वेगं रिपुलोपकारः ॥२०॥

वसुन्धराभारममुं स राष्ट्रद्रोहे रतं भूपमरातिभूतम् ।
तद् दण्डयामास निरन्तरं यत् सोनुस्मरन्नेष्यति तापमुग्रम् ॥२१॥

लक्षत्रयं चण्डरणः शतघ्नीः स विंशतिं दण्डितमाददानः ।
चचाल तस्मात्पथि कालपीं स्वे पराप्नुवन् स्नेहमनुस्मरन् मे ॥२२॥

चारोऽधिकालप्यददादमुष्मै लेखं मम स्नेहभराभिभूतम् ।
तमाह्वयं बान्धवरत्नमेकं ततुं महासङ्कटसिन्धुसेतुम् ॥२३॥

ज्ञातं चरान् नास्नि ममोक्त एव बभूवतां बन्धुदृशौ सवारी ।
अवातरत्तत्र सुधा स्फुरन्ती पूर्वं क्षणाद् यत्र गरं बभूव ॥२४॥

स्नेहेन सिक्तो निमिषेण लेखं स प्राहिणोद् द्राक्प्रति रावमेकम् ।
ततश्च सम्पूर्णमनोरथः सञ्जितो जयश्रीरिति एति बन्धुः ॥२५॥

सौगन्धिकान्वेषणतत्परात्मा धावन् धरित्रीं दलयन् स्वगत्या ।
प्रभञ्जनो वर्त्मतरुव्रजानां स पाण्डवोऽभूत्सजवः किमेवम् ॥२६॥

पश्यारिसेनामनु हन्त लग्नश्चकार खण्डप्रलयस्य दृश्यम् ।
विमुञ्चत द्राक् सुभटाः शतघ्न्याः सर्वङ्कषा गोलततीं सवेगम् ॥२७॥

कोलाहलं स्याद् घननादघोरं शत्रुव्रजेसुव्यसनं भवेद् द्राक् ।
पश्याथ तात्याः सुसमीप एव पश्याथ कुन्तान् स्फुरतश्च खड्गान् ॥२८॥

इयन्ति वर्षाणि गतानि रक्षासूत्रं स्वयं ते न करे बबन्ध ।
जीवामि चेदद्य तदा करिष्याम्यमूं सदिच्छां हृदयस्य पूर्णाम् ॥२९॥

नवां भुशुण्डीमनयस्तदा मे कथं लभेते स्म दृशौ विकासम् ।
विलोक्य ते चाग्रज कस्य हेतोर्विमुञ्चति स्मामितमश्रुवारि ॥३०॥

स्मराम्यहो तत्र पितृव्यगेहे नानाश्च बाला अपि सार्धमास्ताम् ।
तथा वचांसि स्खलिताक्षराणि कथं वदेयं न विकस्वराणि ॥३१॥

मनूर्हि कल्याणपरम्पराञ्जुड् मत्तोऽपि नूनं भविताधिकेयम् ।
एषा मदीया भगिनीति दर्पं वहन् भविष्यामि कृती सदेति ॥३२॥

द्रष्टार आसन् वयमेव तस्मिन् कालेद्य तु स्यात्सकलोऽपि लोकः ।
भवेन्नभो द्रष्टृ तथा दिनेशो द्रष्टा भवेत्तारपतिश्च ताराः ॥३३॥

कूलङ्कषा वारिधयः सरांसि पश्यन्तु पश्यन्त्वरयोऽतिवेगाः ।
पश्यत्विला पश्यतु भूमिकम्पः पश्यत्वसीनां महिमा करालः ॥३४॥

सम्भ्रामयामोद्य सुभीष्मवात्याः प्रवर्त्तयामः प्रलयं प्रकाण्डम् ।
निपातयामः शिविराभ्रमभ्रं धरां समग्रां परिवर्त्तयामः ॥३५॥

तराशु बन्धो तर वेत्रवत्या विस्तारमाजह्वरिमद्य वेगैः ।
द्वाविंशतिं द्राक् शलभान् सहस्राण्यादाय निर्वापय शत्रुदीपम् ॥३६॥

अरातयस्तावदिमे म्रियन्ते वहन्तु वीराः पुलकं स्वकीयाः ।
ममेयमेवास्ति यमद्वितीया श्रावण्यपीहास्ति वसुन्धरायाम् ॥३७॥

त्वयैव बन्धोऽद्य करद्वयेन वैवश्यकारा भवतात्सुभग्ना ।
स्तब्धान् विलोकस्व तया स्वकीयान् विदीर्यमाणान्क्रकचेन मूर्ध्नि ॥३८॥

तात्यास्तथैवायि मदीय बन्धोस्त्वद्यापि तां शैशवकालिकीं मे ।
स्मृतिं वहामि प्रथितां सयत्नं जलं दधाना नयनद्वयेन ॥३९॥

जाज्वल्यते वह्निशिखावली हा झाँसीमरीणां परितः प्रचण्डा ।
आस्यं जरीजृम्भत एतदीयमिमां द्रुतं भक्षयितुं समग्रम् ॥४०॥

आगच्छ पर्जन्य इवाविलम्बं प्रशाम्य तापं शिशिरीकुरुष्व ।
ये भक्षणायात्र समागतास्तान् निमज्जयन् वारिमहौघदानात् ॥४१॥

भूमी रिपूणां शवगर्त्तभूमी भवत्वटन्तु ध्वज आशुगृध्राः ।
सौभाग्यमुक्ताः प्रतिवीरवामाः क्रोशन्तु सर्वत्र महीतलेद्य ॥४२॥

अल्पीयसापि प्रबलो बलेन प्राप्नोति तात्या विजयं यदायम् ।
सर्वाधिकेनापि तदा कथं नो नयेत शत्रुं प्रलयं क्षणेन ॥४३॥

आलोकयालोकय हन्त तात्या आप्नोति वात्यानिभमाजिमध्यम् ।
शुष्का अरीणामसवोऽथ पश्य छिद्येत वीरः सकलो ह्यमीषाम् ॥४४॥

द्राग् ह्यूगरोजं नय कालगेहमिह्यग्रमिह्यग्रमुदीर्णशौर्यम् ।
स्वातन्त्र्यपद्मं वत भक्षकोयं कीटः खलो मर्दय मर्दयैनम् ॥४५॥

वमाम्यहं पृष्ठत इद्धमग्निमग्रे वम त्वं प्रसभं रिपूणाम् ।
तथा कुरुष्वाद्य यथा विमुक्ति-नौः कर्णधारेण लभेत पारम् ॥४६॥

न पेषणीचक्रयुगात्कथञ्चित् कणोपि कश्चिद् बहिरेतु सिह ।
वदन्तु लोका अथ सास्ति झाँसी निष्कासिताः सन्ति यया सपत्नाः ॥४७॥

रक्षस्त्वये वीर शिवाजिनस्त्वं परम्परां विस्मर मा कदापि ।
कृत्वा प्रवीरांस्तव मावलाभान् प्रेङ्खाधिरुह्यामितहर्षदोलाम् ॥४८॥

परं तु किं किं घटितं सुमञ्जुः सा योजना किं विफलास्ति जाता ।
सुदर्शनोभिद्रवति प्रकाश आहोस्विदाक्रामति सर्पसङ्घः ॥४९॥

स्फायस्व हे वेत्रवति प्रकामं रुन्त्स्वाथवा मज्जय कान्दिशीकान् ।
भीष्मस्य देशेप्यधिगच्छतां हा जन्म प्रतिज्ञासुपणस्तथैदक् ॥५०॥

पलाय्य गोपायत योषितो वो वस्त्राञ्चले त्रात निजानसून् द्राक् ।
किं रे गुरुण्डा अवलोकयध्वे वमेद् भुशुण्डी गुलिकाभिरन्तिम् ॥५१॥

तात्या यमं यान्तु पलायितास्ते रक्ष्यस्त्वयात्मा विवशो ह्यहो त्वम् ।
भाग्यात्वलभ्यां रहयस्व झाँसीं पराभवं सापि मलं चिनोतु ॥५२॥

इतीरयन्ती नरपार्द्रचेता विलोकयामास बलस्य भीतिम् ।
राष्ट्रस्य तासां बत लालसानां चिरन्तनानां प्रथितं प्रणाशम् ॥५३॥

गुरुण्डभाग्यं परिवर्तितं यत् काले तथाजौ विधुरे तदेव ।
बभूव घोरं भरताचलायाः सहस्रधा विग्रहकर्त्तनं हा ॥५४॥

भाग्यं स्वयं वक्रमहो यदा सद् विश्वासघातं कुरुते विलज्जम् ।
अधित्रिलोकि प्रबलप्रतापः स्याद् हन्त को नाम तदा सहायः ॥५५॥

तात्या भटा ये प्रबला नितान्तं विधाय लोलाभुवमाजिभूमिम् ।
उपागमत्र् शत्रुदलस्य तस्य हत्वा स्वमन्यत्र चिरन्तनं तत् ॥५६॥

त एव सामान्यमवाप्य घातं तथा बभुवुः परमाकुला यत् ।
विसस्मरुर्द्रागनुशासनं तत् पलायिताः शत्रुपराङ्मुखा हा ॥५७॥

अहो पलायन्त विमुक्तचिन्तं प्राणप्रयाणादतिभीतचित्ताः ।
स्वमस्तके चन्दनपङ्कपूज्ये विलेखितुं हन्त कलङ्कमङ्कम् ॥५८॥

छेत्तुं न पृष्ठं समुपागमत्कोप्येषां महाभीतिपरायणानाम् ।
विहाय हा विश्रुतिमक्षयां ये गोपायितुं सक्षयमङ्गमायन् ॥५९॥

तात्या भटाण् टोपयुपाह्व ऊचे किं किं निवर्त्तध्वमये प्रवीराः ।
कण्ठश्च रूक्षोभवदाशु नेत्रकोणौ च वारि प्रचुरं स्म धत्तः ॥६०॥

तटान्तरं प्राप्य शिलोपविष्टस्तात्या असीमं मथितो बभूव ।
विचिन्तयन् भारतभाग्यभानुर्न्यमज्जदापन्मकरालये हा ॥६१॥

पुर. कथङ्कारमयानि नाना भविष्यतीति प्रथितो भयाक्तः ।
कथं च लक्ष्मतः पुरीं पराप्तां प्रदर्शयिष्यामि मुखं ममेति ॥६२॥

गुरुण्डसेना तु चकार यत्नं महामहोत्साहयुता सुतीव्रम् ।
अयाचितं दैववशादवाप बलोच्चयं स्वस्य हृतं समग्रम् ॥६३॥

साफल्यमप्राज्यमपि प्रकामं प्रायेषु सत्साहसमादधाति ।
अपि प्रहीणं विदधाति शक्त्या क्षणेन कण्ठीरववत्प्रगल्भम् ॥६४॥

आसीज्जयाशा बत यैः शतघ्नीभोज्यादिभिः साधनसंचयैस्ते ।
गता अरीणामधिकारसीम्नि ददुर्निराशत्वमतीवघोरम् ॥६५॥

श्रीसम्पदां यस्य चयस्य योगक्षेमेसर्वौ लक्ष्मगाञ्शरीरात् ।
त्यक्त्वा पलायन्त इमे तमेव हा सम्परायाद् विमुखाः सुनीचाः ॥६६॥

न्यधत्त घाते निरतस्य हस्ते वधाय नैजाय नरः कृपाणम् ।
स चाप्यघी दानवतावतारी मनीषितं पूरयति प्रकामम् ॥६७॥

हा हन्त तात्याः प्रबलाः शतघ्न्यः कालं रिपौ रक्तमपातयन् याः ।
व्यावर्त्तमाना निजमेव सैन्यं ता आपदो हावकिरन्त्यभीक्ष्णम् ॥६८॥

निमज्जयत्यन्धपरम्परा स्वान् सार्धं सहस्रं यमगेहमापुः ।
रसातलं भारतभूमिमानो गतः समो नोद्धरणस्य चाशा ॥६९॥

त एव वीरा असहन्त पृष्ठे क्षतानि हा तानि भयङ्कराणि ।
ते चेदयोत्स्यन्त मृतिं गता अप्यहो अपास्यन्नमृतं न किं तत् ॥७०॥

ततो हतोत्साहमवेक्ष्य वीरव्रजं निजं सा निजगाद राज्ञी ।
उद्बोधनाक्तां प्रबलां भ्रमन्ती वाणीं ज्वलन्तीमिव सैन्यमध्ये ॥७१॥

अलं निराशत्वतमःप्रसारैररिप्रणाशाय भवन्तु सज्जाः ।
रक्तेन दुर्गा नव यद् दिनानि नवार्चयन् घ्नन्तु न तद् भवन्तः ॥७२॥

गृह्णीत शिक्षां प्रपलायमानात् पलायनं खल्वमितो विडम्बः ।
गृह्णीत शिक्षां जयिनः सपत्नात्सुखं परं प्राणविसर्जनं वै ॥७३॥

किं प्राणमूल्येन पराप पापः पलायमानो बत कान्दिशीकः ।
कलङ्कपङ्कं खलु केवलं हा मुखे स्वकीये न्यधित प्रयत्नात् ॥७४॥

नैराश्यमेतद् बत कीदृगस्ति कीदृक्च भीतिर्मुखकान्तिलग्ना ।
जाने जयो नीतितरां दुरापो वीरा मृतिर्नाम तथापि नेदृक् ॥७५॥

अप्यद्य यावन्न बलेन शूराः स्वेनैव शत्रून् स्म निपातयामः ।
अप्यात्तदर्पा अभवन्भवन्तष्टोपेर्बलेनैव रिपुप्रणाशाः ॥७६॥

सुशोभिता मारुतिविक्रमेण विस्मर्यतां शक्तिरहो न नैजी ।
कूपारपारोपि न यद्दुरापो द्राग्दीयतां शत्रुपुरे महाग्निः ॥७७॥

तात्या भटाः सन्ति पराजिता इत्यलं निजान्प्रत्यवमानदृष्ट्या ।
हा केन सुष्वाप मनस्विता वः कनीनिकाः केन न कार्यशीलाः ॥७८॥

अयुद्ध्यतेयं स्वबलेन झाँसी न युद्ध्यते योत्स्यत इद्धमा नो ।
न पौरुषं चेन्निजमेव शूरास्तदा कियद् दास्यति नः सहायः ॥७९॥

अदर्शि यत्पौरुषमद्य यावच् छ्रेष्ठं तथा योभिनिवेश उच्चः ।
तदन्तरेणास्मि पणीकृतासुव्रजाः प्रवीरा विदिता निकामम् ॥८०॥

तथैव शत्रूनतिसाहसेन प्रशंसनीयेन निपातयध्वम् ।
अङ्गीकुरुध्वं च कृतिव्रजं तं कर्तुं न कश्चित्प्रभवत्यलं यत् ॥८१॥

संमानितस्यापयशोस्त्यनिष्टं मृत्योरपि प्राज्यतरं सदैव ।
आशाविसर्गश्च पलायनेन समः पराप्ते स्थित एतदाभे ॥८२॥

पञ्चत्वयानं भटराजिराजे न मञ्चवर्त्तिन्युपपद्यतेत्र ।
तस्यापवादः खलु जीवितत्वं उत्सर्ग उत्सर्ग उदेत्यसूनाम् ॥८३॥

जयेन युक्ताश्च भटा भवेऽस्मिन् भविष्यथोत्तुङ्गतरोत्तमाङ्गाः ।
पराजिताश्चानुभवोद्भवायाः पात्रत्वभूषाः परिपक्वतायाः ॥८४॥

मृता यशः सातिशयं लभेरंल्लोकांश्च सर्वोच्चपदान् भवन्तः ।
शिष्टा म्रियेरन् सुभटा गरिम्णा राज्येन निष्कण्टकसंमदेन ॥८५॥

पलाय्यते केन मृ भयेन मृतिस्तु कार्थं सरलं नितान्तम् ।
सा च ध्रुवेत्यङ्ग विलोकयद्भिर् हन्येत चार्ज्येत च पुण्यराशिः ॥८६॥

सङ्ग्रामसिंहस्य च राष्ट्रमेतत्प्रतापसिंहस्य च पुण्यभूमिः ।
वीराग्रगामी शिवराज एतद्रक्षां स्मरन् वै सुखवञ्चितोभूत् ॥८७॥

युद्ध्वा म्रियध्वं च दिनेशबिम्बं भित्त्वानुसन्धत्त च लोकमुच्चैः ।
शिष्टाश्च यावत्पतिताय तावद् दत्तारये क्रन्दनशोकमृत्यून् ॥८८॥

पतन्तु घोरे व्यसने सपत्ना भवन्तु मूर्खा अधुना वराकाः ।
नयन्तु नो विस्मरणं कदापि स्थौजस्विमौल्याभरणेषु हीराः ॥८९॥

आद्यं दिनं मूर्खदिनं रिपूणामप्रैलमासस्य भवेदिदं वै ।
तथा घ्नतारीन् निमिषेण सर्वान् यथा लभेरन् परलोकमेव ॥९०।

नैराश्याद्ददती विमुक्तिमथ सा शौर्यं गता मग्नता-
मारेभे वदितुं यदैव वचनं तच्छ्लेषकोटिं चिरम् ।
तारुण्यं धमनीषु रक्तरहितास्वाधाय देवी बभा-
वाश्चर्येण गलन्निमेषनयना पैक्षन्त तां सैनिकाः ॥९१॥

झाँसीं मुधैवापिम हन्त मर्त्तुमिति ब्रुवन्तोनुशयं दधाम ।
कासीदपेक्षागमनस्य चात्र प्रदर्शनस्य स्वपटिष्ठतायाः ॥९२॥

आदेशमुल्लङ्घ्य न कैनिँगस्य झाँस्याक्रमं चेद् विसृजेम तर्हि ।
कथं विषीदेम कुशाग्रबुद्धेरुपायतो लब्धगुणा निकामम् ॥९३॥

इत्युवाच रिपुसंहतिः समा
साहसं नवमवेक्ष्य पुरस्य ।
स्वस्य ताडितवती बहु शीर्षं
गण्डमाशु विनिधाय करेस्थात् ॥८४॥

• • •

## सर्गश्चतुर्दशः

अप्रैलमासस्य तृतीयमैद् दिनं वज्रप्रहाराय वसत्सु तत्पुरे ।
अभ्यद्रवंस्तत्र रिपुव्रजा द्रुतं गृध्रा इवाच्छेदपरायणाः परम् ॥१॥

दुर्लक्षणानि प्रथितानि सर्वतो हाहेतिशब्दश्च बभूव विस्तृतः ।
चिन्तावनम्रेण दधाव मौलिना सर्वो जनस्तत्र पतत्सहायकः ॥२॥

क्षोणी चकम्पे सहसा भयङ्करं भूकम्पदीर्णेव महाविपद्वृता ।
अव्यक्तशब्दा बहवः समुत्थिताः कोटिं परामैत्प्रतिनादसञ्चयः ॥३॥

जज्वाल वह्निर्जनतायुधव्रजे प्रापुः शिखा वृद्धिमनेन्धनादिकम् ।
ज्वालावलीभिर्वदनानि सैनिका दध्रुस्तदा रक्ततराणि विह्वलाः ॥४॥

वामो भटानां खगपक्षवायुना शुष्यच्छ्रमाम्बुः सुहिमो बभौ भुजः ।
अस्थ्नां समूहो न्यपतद् विहायसं विदधद् विदीर्य तूर्णं विभीषिकाः ॥५॥

तारा ग्रहाः सप्त दिनेशमण्डलात् तत्रत्यवाहा इव भूमिमापतन् ।
सेनापतीनां गुणिनोऽप्युपाविशन् घोटाः क्षणान्नाशमुपैन्महोत्सवः ॥६॥

उल्काश्च्युता अम्बरतः प्रतिक्षणं प्रान्ता ध्वजानां ज्वलितास्तथाग्रिमाः ।
दध्रुः प्रकम्पं सहसा निरन्तर-मासीत्सुशान्तः पवनो यदप्यहो ॥७॥

दाहो दिशां भीतिकरो व्यलोक्यत झञ्झा क्षणेनाघटताभिभीतिदा ।
सव्येतरं वीरभुजं स्पृशन् द्रुतं रावैः सुघोरैः पशुसञ्चयोद्रवत् ॥८॥

एकोपि नासीज्जलदस्तथाप्यहो शम्पा निपेतुः शतधावखण्डिताः ।
अस्राण्यमुञ्चन् भटवाहनानि तं ध्वंसं विजानन्त इवायतिस्थितम् ॥९॥

वहन्तु वीरास्तु भयं कियच्चिरं चिन्ताः समस्ताः परिहृत्य तेचलन् ।
कृत्वा शतघ्नीं नयनस्य कर्षणं विक्रेतुमस्थान् प्रबला असून् निजान् ॥१०॥

क्रेतुं च विक्रेतुमसून् रताः स्वकान् पण्यानि नत्थं गणनस्य विस्तरम् ।
लेखुः समं रक्तमसीद्रवेण ते जाम्बूनदाभाक्षरसन्निवेशनम् ॥११॥

वाद्यान्यकस्माद् ध्वनितानि विग्रहं संसूचयन्ति प्रलसं विदार्य कुम् ।
वेमुर्मुखेभ्यः प्रलयाग्निमुद्धुरं घोराः शतघ्न्यः कृतसिंहगर्जनाः ॥१२॥

द्राग् डिण्डिमा वान्तडमड्डमद्रवा उच्चैरवाद्यन्त महाप्रतिध्वनि ।
भेराः प्रचण्डाः श्रुतिभैरवा द्रुतं नाम्नैव भीरून् धृतभैरवान्व्यधान् ॥१३॥

गोलः शतघ्न्याः कृतधाँयधाँयवाग्रे धाव धावेति जगाद सन्ततम् ।
ऊचे भुशुण्डेर्गुलिका गुड्डुगुड्डुशब्दैरये गुण्डय गुण्डय द्रुतम् ॥१४॥

व्याप्तं महादेवपरं हरद्वयं वाग् दीनदीनेति जगाम विस्तृतिम् ।
गौडेति साभ्रेडितभैरयद्रिपुर्दीनो गुरुण्डः प्रपलायितोन्मुखः ॥१५॥

आप्तो विलुप्तश्च मृतात्मसन्निभः शत्रुर्गुरुण्डः समुदीर्णभीभरः ।
झाँसी च दीप्ता परमोग्रतायुता त्रातुं स्वराष्ट्रस्य यशोधिकं परम् ॥१६॥

व्याप्ता गुरुण्डाः शलभा इवोच्चिता दुर्गं परीतं सकलं प्रसह्य तैः ।
निर्मुक्तिमन्त्रस्य रतं विनिर्मितौ सद् राष्ट्रदुर्गं पुरदुर्गमावभौ ॥१७॥

खड्गा झणत्कारभरं वितेनिरे कुन्ताः खडत्कारमतीव भीषणम् ।
दध्रुः खणत्कारचयं फलान्यपि दोषो भटानामतितीव्रमस्फुरन् ॥१८॥

नाजौ शिरस्त्राणकदम्बकं तदा काष्ठासु नाष्टस्वपि तस्तरे परम् ।
धृत्वानुरागं बहुलां धरां प्रति रक्तं भटानां बहिरापतद् हृदः ॥१९॥

आभूषणानां च दृशोश्च सुच्छवेर्वर्णान्तरैरिन्द्रधनुः पटो बभौ ।
तस्माद् वहन्ती बहुदीप्रदेहतां तापत्रयं नाशयितुं प्रचक्रमे ॥२०॥

पुस्फोर धावन्त्यमितं रणश्रिया तुल्या पुरे दत्तनवीनजीवना ।
क्षीणाशतां शत्रुपशुस्तु जीवनं प्रत्यागमल्लूनविषाणवालधिः ॥२१॥

सा राजदण्डं धृतवत्यसिं निजं छत्रं च तेजो रिपुशातनोद्भवम् ।
घोरं किरीटं च शिरस्त्रमायसं पङ्क्यतोभूदरिदस्युरुत्कटः ॥२२॥

यत्रागमत्सा नृपमौलिपूजिता प्राप्ता जयश्रीस्तत एव शत्रुतः ।
स्वातन्त्र्ययुद्धं हि जगाम तत्र पुर्येकं नवीनं परिवर्त्तनं शुभम् ॥२३॥

पञ्चत्वमाप्तं पितरद्य पाहि मां मातर्गतं त्राहि ममाशु जीवनम् ।
गोलः पलायस्व विलोकयैत्ययं नग्नोत्र खड्गोग्निशिखा च तत्र हा ॥२४॥

इत्यार्त्तनादं रिपुसैनिका मिथो विस्तारयन्तो भयमाशु चक्रिरे ।
सङ्घर्ष आनन्दमपाहरत्समं भीष्मा विपत् तत्र पदे पदे स्थिता ॥२५॥

साध्वी जगादैकमिता भटं निजमुत्साहयन्ती बत साधु साध्विति ।
हर्षैकतर्षोस्य भटस्य मानसे शान्तो न्वशान्तो न्विति न स्म बुद्ध्यते ॥२६॥

आहारयारेः पृतनां भटेश्वरेत्युच्चार्य कस्मैचन हारमार्पयत् ।
कुर्वाजिचण्ड प्रलयं रिपाविति प्रोच्यापरस्मै वलयं स्म यच्छति ॥२७॥

शत्रुर्वसेन्नो भरतावनौ यथा विध्वंसलीलां कुरु सर्वथा तथा ।
सा मुक्तकण्ठं विलपेत् सिताङ्गनेत्युक्त्वा परस्मै वसनं ददौ नृपा ॥२८॥

इत्येव कोषं व्यतरन्महेश्वरी भेजेनपेक्षां निजभोजनेपि सा ।
सम्पादयामः कथमुत्तमर्णतामित्यात्मकोषेष्वसयोभवंश्चलाः ॥२९॥

हृष्टाः शतघ्न्यो गलदग्निसञ्चया आत्मोपयोगेन रमेण भीप्रदाः ।
अस्त्रान्तराण्येकपदेनुशिश्यिरे पेठुः खणत्कृत्य लिपिं ललाटगाम् ॥३०॥

सिद्धीकृतं तद्धि निजेन कर्मणा यत्क्रूर दर्पेण पुरोक्तवानिति ।
स्मेरानना प्रोच्य भटं भटं निजं विक्षोभयन्ती पवनं दधाव सा ॥३१॥

तूष्णीं शतघ्नीं कुरु वारयात्मनः श्रान्तिं खुदाबख्श जितं त्वया त्वितः ।
सन्देहमन्दो विजयः कदापि नो गोलोस्त्यमोघो हि गुलाम गौस ते ॥३२॥

एवं निगद्याशु दधाव धीमती गत्या पराजित्य क्षणप्रभामपि ।
झाँस्या भटाः साहसमाप्नुवन् परं भूता अपास्तोत्कटतेजसोरयः ॥३३॥

आहन्यमानाः शतशः पुरो भटैरुन्मादिताः केचिदकृष्णविग्रहाः ।
केचिच्च तस्यामपि दुःस्थितौ वराः प्रापुः प्रतीहारमथाग्निनावृताः ॥३४॥

भग्नं प्रवेशार्थमकामयन्त तं भग्नाः परं ते स्वयमेव शत्रवः ।
लग्ना बभूवुर्यमवक्त्रगह्वरे मग्नाश्च नैराश्यपयोनिधौ परम् ॥३५॥

निश्रेण्ययोष्टासु पदेषु योजिता दुर्गाधिरोहाय सपत्नयोद्धृभिः ।
घाताय चेलुर्बत पापिनीभवन् किन्त्वात्मघाते निरता इतीव ते ॥३६॥

आदत्स्व वज्रं करकानिपातनमादत्स्व वप्रस्य शुभोपदां द्रुतम् ।
आदत्स्व दुर्गं बत दुर्गयाचितमादत्स्व पूज्यातिथिदेव सत्क्रियाम् ॥३७॥

इत्थं वदन्तो नगरस्थिता भटा लग्ना भुशुण्ड्या रिपुभर्जने द्रुतम् ।
एको द्वितीयश्च तृतीय आप्तवान् भीष्मो महीयान् गुलिकाकदम्बकः ॥३८॥

रुद्रस्य नाम्नैव पुरेरितेन किं साक्षात्स रुद्रो भगवान् समागमत् ।
योजेयमात्मानममन्यताहितः क्षुद्रीबभूवातिशयेन सोन्मदः ॥३९॥

ह्रीणाश्च शिष्टाः कुपिताश्च शत्रवस्तेषां मुखं दर्शनपात्रतां गतम् ।
सम्राड् बभूवानुचरोपरस्तथा पूर्वः क्षणेनैव विचित्रतां दधत् ॥४०॥

देहो रिपूणां तितउप्रभोलसन् नव्यं विलालीं गुलिकाकृतां दधत् ।
प्राप्यास्नरङ्गं शिखरं सधात्विव क्षोणीभृतो भव्यतरं रराज सः ॥४१॥

यातं शतघ्नीसुषिरं करालतां व्यश्राणयच्छत्रुशवाय पावकम् ।
सन् रक्तकालो निपपात भीषणं गोलाकृतिर्गोल उदीर्णमुच्छिखः ॥४२॥

रक्तः सः गोलो ददृशे कदाचन कालः कदाचिच्च परं न्यभाल्यत ।
पीतात्मतां भीष्मतरां क्वचिद्दधौ मायामयत्वं विरुदं सितं तथा ॥४३॥

कृत्वा शरव्यं रिपुमात्मनो मुहुर्लोकाः पुरो भीषणतां वितेनिरे ।
डीना डिकस्याश्वसुपत्रिणो गतो मीलत्रयं मीकिलजान ईक्षणे ॥४४॥

द्वौ लेफ्टिनेण्टौ पततः स्म शान्तये दोलायमानावधिरोहिणीगतौ ।
ओंकारमेवाभणतां पुनः पुनः कालश्च दंष्ट्राविषयत्वमानयत् ॥४५॥

श्रीवोनस स्वागतमस्ति ते महन् फाक्साधिकोत्साह समीपमस्यताम् ।
इत्थं वदन्त्यो गुलिकानदच्छलात् प्राणान् भुशुण्ड्योरिदलस्य जह्रिरे ॥४६॥

निश्रेणयस्ताः सकलाश् चकम्पिरे हा हेति चीत्कृत्य पलायिता द्रुतम् ।
शीघ्रशब्दमाकर्ण्य निवृत्तिमापतन् सेना रिपूणां निरुपायतां गताः ॥४७॥

दुद्राव सारात्यवली शमोहसत् स्वच्छो रणप्रान्त उदारमोभवत् ।
माया यथैज् ज्ञानमुदैत् समुज्ज्वलं स्वान्तं बभूवामलकान्तिमञ्जुलम् ॥४८॥

द्वारं प्रधानं भयनिर्धनं बभौ शत्र्वन्धकारो गतवान् निरस्तताम् ।
किं किं परं जातमिदं पदान्तर उच्चोषयामास पुरं स एव हा ॥४९॥

दूल्हाज्व उद्दण्डवरस्य तां पुरं विश्वासघातोगमयद् रसातलम् ।
विश्वेखिले नीचतयावुधः श्रुतः स्वस्यैव ध्वंसं यशसश्चकार सः ॥५०॥

स्थानाददूरे सरदारसञ्ज्ञकात् सामन्तपाशो नृपया नियोजितः ।
दुर्गप्रतीहारमवन् स दक्षिणं स्वानेव हा नाशयितुं समुद्ययौ ॥५१॥

पापी पतित्वारिविलोभदुर्गतौ भक्त्वा तडत्कारयुतं स तालकम् ।
स्वाधीनताडिम्भममारयन्नो ग्रीवां निपीड्यामितनिर्घृणेश्वरः ॥५२॥

सुन्दरस्त्वधावीत्सहकृत्वरी द्रुतं मत्तेव नग्नं दधती दुरासदम् ।
दण्डे त्वसौ लौहमये फलीकृते दूल्हाः पतन् घट्टितखण्डितोभवत् ॥५३॥

खड्गं परं खण्डितमेव चण्डिका दीप्तं दधत्यैत्फलदित्सुरुद्धुरम् ।
भीत्या वहन् नर्त्तिततारकां दृशं दूल्हा अनृत्यन्मदमत्तसन्निभः ॥५४॥

तत्रान्तरे किन्त्वविशन् द्विषद्भटाः सञ्चालयन्तो गुलिकां नरीं प्रति ।
सा चन्द्रकान्तिर्वत सुन्दरैद् दिवं शिष्टः कलङ्को धरणौ स केवलः ॥५५॥

चत्वारि गृह्णन्नयुतानि कैतवी स्वेषां महीयोधमताज्जुषां खलः ।
आयोधनं नाटयति स्म दुर्मतिर्यद्वा चरित्रं स्वमदर्शयतपतत् ॥५६॥

सर्वाः शतघ्नीर्हृतगोलसञ्चयाश्चक्रे स सारादु रहिता महाधमः ।
आग्नेयचूर्णं परिपूर्य केवलं नैसर्गिकं ध्वानमजीजनत्खलः ॥५७॥

दृष्ट्वा वहन्तः शतशस्तदानीं भृत्याः स्वशीर्षेण तृणोत्करं द्रुतम् ।
तेनैव निःश्रेणिपदेन शत्रवो विष्टाः कुकृत्यं फलितं दुरात्मनः ॥५८॥

तत्राभवद्राज्यमरातिसंहतेः सा मृत्युदूत्यैव्चरितं गृहं गृहम् ।
झाँसी पुरी सा निमिषेण पावनी जातापवित्रा धिगपुत्रमीदृशम् ॥५९॥

गोघ्नाश्च दैत्या अविशन् मदोत्कटाः पापं विवेश प्रतिपद्य विग्रहम् ।
जातः कदाचार उदक्तबन्धनो लङ्केशकंसादय आपुरुद्भवम् ॥६०॥

आगच्छदुग्रः प्रलयश्च मूर्तिमांस्तापाश्च पापान्यभिपेतुरुद्धुराः ।
श्रुज्व्यः प्रजास्ता विधुरास्ततोभवन्नापेदिरे शापसमा यदारयः ॥६१॥

रक्तच्छटाशैवलिनी जवाधिका प्रोवाह साधं कुणपोर्मिजालकैः ।
प्रोवाह नागश्च हयः समुच्छ्रितः प्रोवाह गुरुचर्म वेगतः रिष्टिर् ॥६२॥

स्वर्याहि हा मारय रे महारवो व्याप्तो विहासश्चरमो जने जने ।
हिंसा बभूवोग्रतमा रणावनीचण्ड्यट्टहासं वितताल चण्डमम् ॥६३॥

ज्वालारसाङ्कां वदनाद् दधद् बहिर्जज्वाल भूभाग्यमभक्षयच्छिखी ।
पूर्लुण्ठिता नीवृदथापि लुण्ठितो नारीजनानां सकलं च लुण्ठितम् ॥६४॥

धर्मश्च कर्माभवतां विलुण्ठिते देशश्च वेशोभवतां विलुण्ठितौ ।
लज्जा च सज्जाभवतां विलुण्ठिते रङ्गश्च सङ्गोभवतां विलुण्ठितौ ॥६५॥

सौधं च रत्नं च जगाम दग्धतां हर्म्यं च कीर्तिश्च जगाम दग्धताम् ।
गेहं च मानश्च जगाम दग्धतां तत्राशु सर्वं हि जगाम दग्धताम् ॥६६॥

व्याप्तं महापापमदो विलोकयत् पापं समाश्वासमितं तदामितम् ।
व्याप्तं महातापममुं विलोकयंस्तापः समाश्वासमितस्तदामितम् ॥६७॥

तत्र श्मशानं विजहास भीतिदं झाँसी बभौ यत्र समृद्धिशालिनी ।
व्याप्नोत्कुमारांस्तरुणान् भयं हतिः प्रौढांश्च वृद्धान् मरणं प्रमत्तता ॥६८॥

तन्वत्युदग्रं रुचिमण्डलं परं क्रोधेन वाष्पाविललोचनाम्बुजा ।
सा चिन्तयामास महाछलं नृपा तत्कल्पना हा सकलैव चूर्णिता ॥६९॥

विश्वासघातादपवित्रतायुता झाँस्यार्त्तनादं कुरुते तपस्विनी ।

इत्युक्तवाक्या तरसा महेश्वरी ज्वालाभिरन्तः समपूरयन्निजम् ॥७०॥

नेत्रे क्षणेनावततार लोहितं कौक्षेयकोऽप्लाशत बाहुरस्फुरत् ।
राज्ञी महोन्मादमुपाहसद्रिपून् दुद्राव कोपाकुलिता मनस्विनी ॥७१॥

ऊचे च कृन्तास्म्यरिमुण्डमण्डलीं सम्पूरयिष्यामि समस्तकामनाः ।
चिन्तां त्यजेद् भारतमेदिनीप्रसूर्वज्रः पतत्येष सपत्नमण्डले ॥७२॥

कोटप्रतीहारमपावृणोत्सुमुख्याक्रामति स्मामितकोपनाप्लुता ।
प्रायः सहस्रं भटनायका अनुप्रायानसेर्दर्शयितुं प्रवीणताम् ॥७३॥

सैन्यद्वयं घट्टितवन्महामदं सङ्ग्राम आश्वेव बभूव भीषणः ।
प्राणा निरस्ता अभवन् प्रियाः परं व्यापादयेहीति वितेनिरे रवाः ॥७४॥

घोरः कृपाणो नृपतीश्वरीकरे भीष्माट्टहासेन समं महास्यः ।
वर्षन्नदभ्रां विबभौ शिखावलीं शत्रून् विरक्तीकृतवान् रणाङ्गणे ॥७५॥

कण्ठे समालिङ्गितवानरिं मुदा वक्षस्यमन्दं विशति स्म चोन्मदः ।
उन्मूलयन्द्वन्द्वभयार्त्तिविस्तृतिमुत्पाटयंस्तत्सकलं छलं बलम् ॥७६॥

प्रान्तो विभाति स्म रणस्य तेन यः शान्तं तदास्तित्वमभूत्क्षणान्तरे ।
शीर्षाण्यतान्तं न्यपतन्महीतले भ्रान्तः प्रतापः सकलोरिदर्शितः ॥७७॥

अत्राकरोद्घातमुदीर्णकम्पनं तत्राकरोद् घातमनल्पविप्लवम् ।
भागोभवन्नो समरस्य तादृशो यत्राकरोद् घातमहो न चण्डिका ॥७८॥

तारं सपत्नाः करुणं समेवदन् यामः स्वयं मर्षय मर्षयाम्बिके ।
सर्वे प्रजाः स्मो वयमत्र सेवका राज्यश्रियं पालय पालयाद्य नः ॥७९॥

त्वं फुल्लितो माद्य फिलिप्स माद्य रे खड्गः पतत्येष भवस्यतो न हा ।
स्थानं त्यजैन्थोनि सपद्यहो निजं मा स्थाः प्रमादं कुरु नो भयावहम् ॥८०॥

किं गन्तुकामोसि यमालयं यम विल्यादिकेक्षस्व पलाय्यतां द्रुतम् ।
ज्ञानं त्यजेर्जान न हीपविश्यतां पश्यापतन्तीं तरसा कृपाणिकाम् ॥८१॥

इत्थश्वसन्तो रिपवोऽभणन् बहु तूर्णं पलाय्यान्तरिता अनन्तरम् ।
घोटस्तथाधावदधिष्ठितस्तमैत् क्षोणीं यथाभूत्सुहृदः सुहृत्पृथक् ॥८२॥

अन्यत्र रुण्डो न्यपतच्च मुण्डकोप्यन्यत्र नो कस्य क इत्यवेञ्जनः ।
राशीवभूवुश्चरणास्तथा करा आसीन्महाङ्गापण आजिमेदिनी ॥८३॥

जिह्वाय भञ्भा क्षितिपालिनीरयान्नागी ततश्च क्षितिपालिनीरयात् ।
जग्लौ हरिस्त्री क्षितिपालिनीरयाच्छरूपा चकम्पे क्षितिपालिनीरयात् ॥८४॥

आरातयः संयमनीं गताः शतं शेषाः पलायन्त पुरं प्रति द्रुतम् ।
नीचा भुशुण्डीगुलिकानलेन ते झाँसीमशेषां हतवन्त आविलाः ॥८५॥

उल्लङ्घितो युद्धविधिः प्रयाणकं जातं विपद्ग्रस्तमरिं विना स्थितम् ।
आक्रान्तिरासीच्छमनाननाश्रयो द्वेष्टापि दृष्टो दिशि नो क्वचित्तदा ॥८६॥

द्विड्द्रोणसूनोरपहृत्य धाम वह्नाक्षिप्य राज्ञीद्रुपदात्मजातुषत् ।
सन्तानहत्याप्रतिशोधतस्ततो रोषश्च भीष्मः शमनं मनाग्गतः ॥८७॥

कुम्भीलतुल्यं निभृतं स्थितो रिपुर्व्यापादनं सम्भवति स्म किं क्वचित् ।
तच्चौर्यकार्यं हि तथापि सुच्छवे राज्ञ्या अभिव्याप जने जने द्रुतम् ॥८८॥

राजाश्वशालावनयोजिता अपि श्रेष्ठा भटा आजिकृतं निशम्य तत् ।
श्रद्धासरित्याशु गता निमग्नतां पुस्फोर सर्वोवयवो मुहुर्मुहुः ॥८९॥

आक्रम्य दुर्गं समवैनरातयो वज्रारवा घोरतरा इवाम्बुदाः ।
तां मन्दुरां प्राणभृतोपि किं तु ते दास्यन्ति रक्षापुरुषा विनीतवत् ॥९०॥

क्षिप्रं शवास्तत्र शवेषु पातिताः कीनाशलोकं शतमैनरिव्रजाः ।
एकैक आरक्षक ऐद् दिवं प्रति हत्वा दशारीन् रणदुर्मदान्तरान् ॥९१॥

स्वामिनीं प्रति निबद्धपाणयश्चन्द्रहाससहिता भटेश्वराः ।
शीघ्रमेव जगतीमवर्जयन् व्याहरन्त उदगान् दिवामणिम् ॥९२॥

प्रोक्तवन्त इव हन्त हेम्ब न त्वत्कृते चक्रमहे मनागपि ।
स्वस्य कं कमभिलाषमात्मना खण्डितं बिभृमहे च मृत्युना ॥९३॥

तज्जहास शतमदूर्ध्वमुच्चकै रक्षिणां भरतभूतलाश्रयाः ।
तेधिरुह्य शवमेव शात्रवा मन्दुरां दुरितिनोधिचक्रिरे ॥९४॥

ज्योतिरज्ज्वलयदम्ब हे भव-
त्यत्र कौ यदधरीकृतार्कमम् ।
तद् गतं कुलिशतां पतिष्यति
द्वेष्टृषु प्रतिभयं युगे युगे ॥९५॥

• • •

## सर्गः पञ्चदशः

समधिकतमां पीडां दत्त्वा ननाश पुरी परा
सिततनुजुषो लग्ना ध्वंसे निरस्त्रजनस्य हा ।
अभिभवयुता भूभृत्पत्न्या सुगुप्तकलेवरा
व्यधिषततरां पुर्यां तस्यां खला मृतिताण्डवम् ॥१॥

अधिकरमधात् कोप्यग्न्यस्त्रं गुरुण्डदलाग्रणीर्
भयपिशुनकं सङ्गीनं कोप्यधत्त बलोद्भटः ।
अघसमुदयं प्राप्तुं कश्चिद् दधाव सहासिना
दहनसहितं तैलं कश्चिद्दयारहितोधित ॥२॥

सिततनुभृतां भूता लक्षं जना असिभोजनं
वसनरहितीकृत्यानेके कृता हतिजर्जराः ।
सभयवदनं कश्चिज्ज्वालाध्वजं स्म निरीक्षते
तदुपरि तथा रौद्रां मृत्योर्विलासकलां तताम् ॥३॥

गगनहृदयं भेदं भेदं जना व्यलपन्बहु
वसननिवहं छेदं छेदं हताः प्रतिरोम ते ।
परविकलतां तां योपश्यत्स एव जनो मनाक्
पुलकममितं कुर्वाणां तां व्यथां कथयेत्पराम् ॥४॥

दिशि दिशि महाज्वालैवासीत्तता क्षितिमण्डले
नभ उपगता सूर्यस्यासावगादनुबन्धताम् ।
द्रुततरगताः सन्दीप्याग्निं शिखासु धरारुहां
भयदमपतन्विङ्गालाल्योटवाविव खाण्डवे ॥५॥

अघटत यथा दाहोदावो जना व्यथितास्तथा
सलिलमिति ते क्रोशं क्रोशं गता अमरावतीम् ।
अतिविकलताघोरस्तापो हि घोरतरोभवत्
तदधिकतरो पीडावेगोविशद् हृदयस्थलम् ॥६॥

कुणपजनितं पूतिं गन्धं वहन्नतिभीषणं
करुणरुदनध्वानं त्राहीत्यथो दधदात्मना ।
स्वयमपि तदा किं तां पीडां सदागतिरन्वभू-
दुपचितजवं सर्वस्यान्तः प्रपूरितवांस्तया ॥७॥

धमदिति महारावं कृत्वापतद् भवनं धरां
सणदिति रवं तन्वन् वाहस्तथा गुलिकाचलत् ।
प्रतिभयमिदं दृष्ट्वा मूर्च्छां गतं नयनद्वयं
विबुधवनितावृन्दातिथ्यं जनः सकलोविदत् ॥८॥

बहु मनुजता दारं दारं द्युरो व्यलपन्निजं
बहु दनुजता कारं कारं दती व्यहसद् बहिः ।
अलभत रिपुर्हर्षं प्राज्यं प्रदर्श्य कृतीरिमाः
किमिति वदिता लोको भावीत्यहो न ममर्श सः ॥९॥

इति समुदितां दर्शं दर्शं व्यथां परमां नृप-
त्न्यभवदमितं मत्तस्वान्ता छदिःपतनाकुला ।
तरलनयना सेना शेषारुधत्परितो गता
जननि बहुलं कार्यं शेषं तवेति वदन्त्यमूम् ॥१०॥

कमलनयना दृष्ट्वा झाँस्यां धगद्धगदुज्ज्वलद्-
हुतवहशिखां सद्यामोहापतद् मथितान्तरा ।
अवददधिकोन्मत्ता घातं निपातय मत्परे
सरलसरलान् निर्दोषान् हंस्यहो अघिता रिपो ॥११॥

अथ नयनयोर रेजे रक्तं प्रचण्डविकासयोः
प्रसरितमभूदातङ्काङ्कं तनावतिवेपनम् ।
दितिजदहनाङ्गाराविद्धाविव ज्वलिता अमू
व्यञ्जनसविधं लोम्नामाली न पुष्टिरतेव नो ॥१२॥

रुदननिरतं शोभां काञ्चिद् दधार विलोचनं
करुणमरुणं लोकं शत्रुं विलोक्य मुहुर्मुहुः ।
हिमकण इव श्वेताम्भोजे बभूव विराजितं
जलमिव जपापुष्पे गुत्से वभावतिमञ्जुलम् ॥१३॥

हृदयमभवत् प्राज्योच्छ्वासं ततस्तरलं परं
नयनसलिलं वाष्पीभूतं शरीरभवोष्मणा ।
विलिखितमभूदार्त्यालेख्यं विलोचनमन्दिरे
परमुपरि स्विन्नाङ्गानां बभौ प्रतिविम्बितम् ॥१४॥

अधिगतवती दीव्यत्कृत्या सहस्रदृशः प्रभा-
महितदितिजान् चूर्णीकृत्य ज्वलन्महउज्ज्वला ।
सनयनयुगो देही भूतः सचित्रशतच्छविर्
हृदयसमतां तन्वञ्जातो व्यथाशतभाजनम् ॥१५॥

नयनयुगलं व्यावृत्तं द्राङ् नभो वहदार्द्रतां
तमन्वगयत भ्रान्तभ्रान्तं निरन्तरमीश्वरम् ।
वितरति धरा घाते घातं यदैव निरन्तरं
भवति भुवने श्रेष्ठालम्बस्तदैककमम्बरम् ॥१६॥

उपरि ददृशे भाँस्याः शत्रोरुदग्रगतिर्ध्वजो
भुजगवनितातुल्यं रेखा दधाव सफूत्कृति ।
अभवदथवा जालाभा सा महोत्सुकतां गता
सकलनगरीं बन्धुं शीघ्रं महाकपटान्विता ॥१७॥

व्यमृशदवशा सा स्फाराक्षी सती नृपतीशजा-
न्यहह भवति स्वप्नासत्या विमोक्षणकल्पना ।
पतति करुणा मूर्च्छातः कौ पुरेत्र मुहुर्मुहु-
र्मरणमुपयात्युज्जृम्भास्यं समीपतरं वत ॥१८॥

अहह मनुजः क्रूरः क्षित्यामियान् भवितुं क्षमः
स्फुटति हृदये तस्यैवं हा दनूद्भवताङ्कुरः ।
मरणवरणं चक्रुर्ये ते क्षते रहिता अहो
मृतिमुखगतास्ते लोके ये ह्यरिप्सत जीवितुम् ॥१९॥

हरणकरणं वै प्राणानामरैरपि कैतवा-
द्दहननकरणं स्त्रीबालानामपि व्यथितारतेः ।
दुरितमिति यन्मत्वा पुण्यं मयार्जि सितप्रभं
द्रुहण भगवंस्तस्यैवेदं फलं समवतार्पितम् ॥२०॥

अकथयत च श्वेता नीचा निशाम्यत निर्घृणाः
स्मरत वनिताबालान् योहं तदाशरणान् परान् ।
सलिलमशनं दायं दायं सुगुह्यमजीवयं
भटसमुदयक्रोधेनालं प्रणष्टयशा अपि ॥२१॥

दहथ सलिलं भोज्यं यूयं त्वदोषजनस्य हा
स्वदुरितशतं पुष्टीकर्तुं किमेष समुद्यमः ।
उपकृतिफलं यूयं दद्ध्वे मयीदमहो खला
अहह पतिताः किं नेशान्तस्त्वनेन विद्रूयते ॥२२॥

तृणिततनवः पौरप्राणा विहासयुता गता
विलिखनपरास्तच्चर्चानां सुवर्णमयाक्षरैः ।
रुधिरमरुणं मार्गं मूल्यं विना सुलभत्वमैन्
निरतहृदया मुक्त्यर्चायां भटा असुभिः परम् ॥२३॥

अहितपृतनाधावीद् द्रुणावलीव सुदुस्तरा
भरतमहये नैजं दास्योपहारमुपानयत् ।
नगरमभवत्प्रेतक्षोण्या अपि प्रथिताखिलं
पुरुषमितमैद् भूमिर्देहैर्गतासुभिरुच्छ्रयम् ॥२४॥

सुचिरमलसत्सङ्गीनानामखण्डितनर्त्तनं
पुर उपगतो यो भूत्क्षिप्रं स कृत्तशिरा नरः ।
निशितकिरचैर्विद्धं बालोत्तमाङ्गमभूत्सुव-
ह्वदहदसकृत्तप्तं वाहिन्यसृङ्मयवाहिनी ॥२५॥

ध्रुवमलभत स्पष्टं रागं क्षतं वदनाम्बुजं
भरतधरणीजातो धत्तेम्बुजं प्रति यं हृदि ।
वत मनुजता ग्रातालिप्ता वभूव घृणास्पदं
स्वयमभिभवं स्वं स्वीचक्रे तदा दनुजत्वतः ॥२६॥

अश्रुतजनतारक्तै रक्तैर् विधाय मधूत्सवं
किमपि गतवांस्तृप्त्यात्मत्वं खलः खलु नादिरः ।
कुरुकुलवधात् सन्तुष्टिं यां गतादितिजन्मता
पुनरिह रणे तामेवाप्नोन्न हा दितिजन्मता ॥२७॥

अरिभिरधमैर्लुण्ठामारं कृतं प्रबलं तथा
स्वमनसि यथा लुण्ठाकाल्यप्यधत्त पराजयम् ।
मणशतमिता मण्याल्युच्चप्रभा पथि लुण्ठिता
बहुगति गृहेष्वापूर्णत्वं कृतं मरणावधि ॥२८॥

अशितितनुभिर्लालोच्छिष्टोपभोज्झितवस्तुकं
पुरुषपशवो राष्ट्रद्रोहे रता अलभन्त ते ।
अकृपत गता गेहं गेहं भयङ्करलुण्ठनं
क्वचिदपि गतं दस्योर्मुक्तिं न भाजनमप्यहो ॥२९॥

वसनमनयद् हैद्राबादाद् बलं यदुपागतं
शवपटमपि स्वीयं कर्तुं बभूव महोद्यमम् ।
बलिभुगरिवद् भृङ्गारीवच्च सद्मनि खण्डिते
भ्रमणनिरतश्चिन्तादीनो बभावहितः खलः ॥३०॥

महदपि यथा कुर्वन् पापं स्वपालयितुः कृते
भवति खगहा संसारेस्मिञ् शशादन उद्धुरः ।
भरतधरणीवासो तद्वद् बभूव स्वघातक
इदमघमपि प्रेक्ष्याकस्माद् बभूव नमच्छिरः ॥३१॥

प्रतिभयमभूत् तद्दस्युत्वं हि सप्त दिनान्यहो
प्रतिक्षणमरिर्दस्युर्झांसीं विलुण्ठितवाञ् शुभाम् ।
किमनुदिवसं द्वीपाद् द्वीपाद् वसूनि समाहृता-
न्युपलनिचयं मीरान्मीरादथोद्धृतमाप सः ॥३२॥

नृपतिमहिता वीक्षाञ्चक्रे निमील्य विलोचने
विवशकरणा कां सेहे सा व्यथां न मनस्विनी ।
व्यथितहृदयावामेनाहन् करेण निजालिकं
गगनमसकृच्छ्वासोदन्तं जिघ्राय तपस्विनी ॥३३॥

विकलविकलः कश्चिद् धावन्नुपेत्य तदन्तरे
पथि परिपतन् प्राणन् कष्टं दधद् गतधैर्यताम् ।
अकथयदये मातर्वक्षोऽप्यगात्परमोदयो
व्रणशतयुतः सङ्ग्रामाभो रणाश्च चचाल सः ॥३४॥

अनुचरसमं वश्यीकर्त्ता शतघ्न्यनलं सदा
नगरशरणं राष्ट्रे रक्तो रणाङ्गणदुर्मदः ।
अनमिततनुर् मुख्ये द्वारे बभूव गिरिस्थिरो-
गणितगुलिकाच्छिन्नच्छिन्नः सुरातिथितां गतः ॥३५॥

श्रवणकरणान्मूकत्वं यात्युपाविशदाहता
नयनसलिलोत्पीडोद्विग्नेत्युवाच सुवातुला ।
करविरहिता भूर्यारम्भश्रवःसमतां गता-
स्म्यसुविकलतां लप्स्ये शीघ्रं समाधिपरा तथा ॥३६॥

नगरि दयिते स्वाघातेच्छा वशीकुरुते मनो
वत कृपणते मां केनेत्थं निपातयसेऽधमे ।
किमिति किमिति स्वान्ताहो मे चितास्तरणेऽधुना
शयननिरतं राष्ट्रं प्रेयो भविष्यति सध्वजम् ॥३७॥

चरमयतनं यद्धोड्डीनं करिष्यति केतनं
रिपुशवततीकिर्मीरिङ्गे निजे कमनीयमे ।
विसृज न धृतिं युक्तो नित्यं न भावुकताश्रयो
नमनमुचितं किं स्वं भङ्गो वरं न नतिस्थितिः ॥३८॥

जरदकथयत्तन्मध्ये कोऽप्यनुत्तमयोधनः
क्षणमपि जने स्थातव्यं नोधिदुर्गमतः परम् ।
अवनिशयनः श्वःपर्यन्तं यथाश्रय एषको
भवति निरता घोरारम्भे सपत्नचरास्तथा ॥३९॥

प्रचलतु पुरीं काल्प्याख्यां मुदात्तपराक्रम-
श्चिरतरमसौ रावः प्रत्युद्गमार्थमपेक्षते ।
चलतु तनुतां मातस्तत्राप्यसीमसुगौरवं
जननि जगते दत्तां शिक्षामसेर्वरमुत्तमम् ॥४०॥

प्रभवति न ते स्प्रष्टुं रोमाप्यरातिकरः क्वचित्
किमुत जनने देहं पूतः सदा स भविष्यति ।
स्पृशति दुरिती यावत्तं स क्षणप्रभया सम-
मयमुपगतस्तावद्भर्गीकरिष्यति तं जनः ॥४१॥

असुसुमनसां सङ्घैरङ्घ्र्योर्विधाय तवार्चनं
जननि कुरुतां दुर्गे पुष्टां जनो भवतीमयम् ।
फलमविकलं जीवस्यास्य प्रतीक्षितमेत्वलं
नवलमपि ते कीर्त्याख्यानं जगन्नयतां परम् ॥४२॥

इति गदितया कर्त्तव्यं स्वं क्षणेन विचारितं
नयनकमलद्वन्द्वे स्वप्नं निधाय तथा रुजम् ।
वचनममलं प्रोक्तं त्वत्तः प्रिये पुरि गस्यते
क्व वत कमना लभ्या त्वादृक् परा हितचिन्तिका ॥४३॥

अतिशयमथ श्रद्धायाः सा वहन्त्यतिमात्मना
सुमधुरतरं कण्ठेनैकं धरन्त्यमलं वचः ।
सरुचि दधती दुर्जेयत्वस्मितं वदनेन्दुना
कृतकरपुटा प्रोचे राज्ञी भवन्त्यतितन्मया ॥४४॥

तव परिहरत्यङ्कोत्सङ्गं जनोयमये पुरि
प्रियतरमहो सम्बन्धं तं छिनत्ति चिरन्तनम् ।
जलमुपचितं नेत्रे प्राज्यं निरेति मुहुर्मुहु-
र्दहति दहनो भीष्मोनन्तः प्रतिक्षणमन्तरे ॥४५॥

मनसि कृतवत्यायुष्मान् नौ भविष्यति सङ्गम-
स्तिमिरदलने सौख्यप्राता रतात्म विभास्यति ।
असमयभवा घोरायाता परं तु घटा कथं
कथमुपगता हा हावर्त्ते स्वजीवतरीरियम् ॥४६॥

विकसनमधादाशापुष्पं सदैव सुमञ्जुलं
विहसनसरित्युद्यच्छोभं ममज्ज परं सदा ।
भवति भिदुरं वृन्तं हन्त प्रलम्बकलेवरं
द्रुहिण हत तन्मुष्णास्येवं प्रसह्य ततं स्मितम् ॥४७॥

प्रथमत उपं लज्जाभारं यदा दधती गुरुं
मनसि निदधत्यत्याचारं प्रियालयभाविनम् ।
अतिशयितमा मात्राधास्त्वं तु वक्षसि वत्सले
नवसदनताश्रूणां भारं सुधीरवगत्य मे ॥४८॥

कथमिति भवेदेष ध्वंसस्त्वयैव कृतघ्न वा
निजमघमिदं दोषं तस्मिन् ददामि किमित्यहो ।
परममधमं कूटं शत्रोरिदं पतितात्मनो
भवतु भवतु क्षिप्रं बन्धं मम श्लथय प्रभु ॥४९॥

वत विलगयन् रुण्डान्मुण्डं गुरुण्डततेर्द्रुतं
वदनमसकृच्चण्ड्याश्चण्डं बिभर्ति समुज्ज्वलः ।
भवति च पलान् मार्त्तण्डोयं प्रचण्डलयोद्धरो
विकटविकट खड्गो ह्येष प्रकाण्डचमत्कृतिः ॥५०॥

शमयति तृषां लीढासृग् द्राग्युगान्तरसञ्चितां
सपदि लभते संतोषाख्यं सुधारसमुत्तमम् ।
लगति च पुनः कण्ठे द्वेष्टुर्ददत्परशीतता-
मपहरति च प्राज्यां तृष्णामसिर्निजधारया ॥५१॥

विलसति दधद् रिष्टिं यष्टिं द्विषच्छिरकन्दुकैः
प्रधनधरणौ सर्वध्वंसं विधाय जनो ह्ययम् ।
कुतुकमुदितं पूर्णीकुर्वे शिशुत्वसमाहृतं
गगनफलकं व्याप्नोमि द्राक् प्रभाकरकोटिभिः ॥५२॥

प्रसविनि चलाम्युत्सर्गो वै वशीकुरुते परं
वत जननि ते स्नेहे विघ्नः परोस्ति समागतः ।
भरतधरणीमाता ह्येषा महाकरुणात्मना
ह्वयति सततं दीर्घोत्कण्ठा दयाल्व्यवलोकते ॥५३॥

प्रसविनि हरेत् किं तत्प्रेमाधुना तव मे मनो
हृदयनयनं नेत्रज्ञानं कथं नु विमुद्रयेत् ।
कथय जननी सर्वेषां नो न सास्ति गरीयसी
न गतिरपरा तस्या हाने युगान्तरकारिणि ॥५४॥

विसृज मनसा त्वं हे भ्रांसि प्रमोदयुतेन मां
सरलहृदये शान्तिं कान्तिं च यास्यसि सर्वदा ।
तव तरलतां दृष्ट्वेर्द्ध्ट्वा न यां विरतिं क्वचिद्
भरतधरणीमाता क्रौर्यैर्यदा व्यथिता परम् ॥५५॥

भरतधरणे त्वां संप्राप्ता सुता तव हे प्रभु
रिपुजलधरध्वंसं कर्तुं सहाशुगसञ्चयैः ।
परिहृतसुखा स्वातन्त्र्यार्थं महाग्रहसंयुता
त्वमपि शृणु मे पूज्ये भीष्मप्रतिश्रवमुद्धुरम् ॥५६॥

यदवधि तनुं रक्तस्यैकोप्यलङ्कुरुते कण-
स्तदवधि भयं कुर्यान्नैव प्रिया भरतावनी ।
अरिशिखरिणां वृन्दे विद्युत्समा तनुजा त्वियं
निपतति विपत् कीदृक्षीति प्रदर्शनलालसा ॥५७॥

नगरि नमनं त्वन् निर्यान्त्या समैतदपश्चिमं
भवतु वत ते घोराक्रन्दस्तु विस्मयशोषितः ।
अयतु वपुषः सम्बन्धस्तु प्रयाणविलीनतां
तमपि मनसः सम्बन्धेन प्रयोज्य लभे शमम् ॥५८॥

वत विलपितुं संभूयेदृश्यनेहसि सन्ततं
भवितुमधिकः शान्तात्मा को न कामयते जनः ।
स्थितिरिह परं शक्यापृच्छ्य प्रयामि झगित्यतो
गुरुतरमहो कौ कर्त्तव्यं हि भावुकभावतः ॥५९॥

याता जागरणं विसृज्य सुमुखी तां भावनिद्रां ततः
सावेशं चलितालिकेन दधती वल्यूर्मिकाणां शतम् ।
भूत्वा शैलतरङ्गिणीव परमा सा दुर्निवारात्मना
संप्राप्ता बहुवेगमाशु नगरीसीमां यमादप्यभीः ॥६०॥

कौवेर्यां दिशि शोभमानममितं सोल्लङ्घ्य तद् गोपुरं
बिभ्राणा ह्यरुणेन तोयमुरसा नेत्रद्वयेनेरितम् ।
उज्झित्वा नगरीं प्रियामतितरां तस्थौ निमेषं बहिर्
व्यावर्त्याक्षिसरोरुहं पुनरपि प्रेक्ष्याथ तां निर्गता ॥६१॥

हन्त द्राङ् निखिलाः प्रजा अमितया मूर्छां तयार्त्या गताः
संज्ञां प्राप्य पुनः पुनश्च रुरुदुस्तां यातनाकारिणीम् ।
राज्ञीयाय दिशा यया नततरास्तां चक्रिरे वन्दिता-
मत्यन्तं रुदनप्रतिध्वनिमिषाच्चक्रन्द मेदिन्यपि ॥६२॥

• • •

## सर्गः षोडशः

ऐत्प्रभातमथ रम्यमम्बरे प्रासरद्दिनमुखस्य रक्तिमा ।
मञ्जिमोपरि च निम्नतो द्रवन् व्याप वेगवलितस्त्रिजगत्सः ॥१॥

चेतनाप्रसरणं कणं कणं व्याप्तवच्च नवजीविताण्वणु ।
लब्धवन्त्यलसभावसृतानि क्षिप्रतामृतमसीम वपूंषि ॥२॥

रक्तिमालसद्रुतात्यनुरागो रागहीनहृदयेप्युदेति यः ।
सन्धिकाल उदिता गतेथवा वासना प्रबलतामुपेयुषी ॥३॥

आगतं रविमु क्षमाणया लज्जया मुखविभा वृतोषया ।
भानुनोत परितुष्टमानसं दत्तमात्मरुचिजालममुष्यै ॥४॥

शोभिता पथि पथि द्रुमराजी राजिता दलतती द्रुमे द्रुमे ।
मण्डितः खगदलो दले दले गानवृन्दमुदितं खगे खगे ॥५॥

गन्धवान् गतिमतीव मादिकां धारयन् स्म वहते पवमानः ।
यां विलोक्य लतिका अतिमुग्धास्तत्यजुर्घनतरूपगूहनम् ॥६॥

पक्षिरावलसितोरुणोदयो मन्थरं तमसि यातवांस्तथा ।
द्योतते स्म करटी चलघण्टानादतः परिचितो यथोन्मदः ॥७॥

धारया स्म वहते मकरन्द इत्रभाण्डमभवज्जगत्त्रयम् ।
आर्द्रयन्त्यतितरां वसुन्धरां सा चकार मदिरत्वमन्दिरम् ॥८॥

मेदिनीमतितरामुपकुर्वन् कल्यकाल उदितः सहतारः ।
स्थान एव भरतः स बभूव वल्लरीस्वरवलाकलागुरुः ॥९॥

शर्वरीं तमिचरा इव कृत्वा राज्यमाशु शुचिशुकचया गताः ।
तामसाः स्म उपद्रवा गता ईरितानि च गतानि पशूनाम् ॥१०॥

फुल्लितानि कुसुमानि सपर्णान्यास्थितानि विटपोत्तमासने ।
पुङ्खितानि निशि लीलया श्लथान्यायुधानि मदनस्य निषङ्गे ॥११॥

वृक्षका विलसिताः शिशुतुल्या मुग्धमाप्य सुमनोमुखं प्रियम् ।
तत्र कज्जलविभां रसलुब्धाः षट्पदा रततरा विनेनिरे ॥१२॥

अस्मदीयमशनं मकरन्दः स्वादु सद्म सुखदाय्यरविन्दम् ।
विभ्रमस्य समयो मधुरूपः प्रेम जीवनमथ च्छलहीनम् ॥१३॥

इत्युवाच खलु षट्पदसङ्घो गुञ्जितेन विहरन्नतिमुग्धम् ।
यः स्वरेण विहिनेन तथैव मानसं जनगणस्य जहार ॥१४॥

नम्रतां प्रति रसालसाल पेल्लब्धवान् फलभरं गुरूत्तमम् ।
सज्जनो नततयोन्नतिमेतीत्युत्तमेन विधिना न्यदर्शयत् ॥१५॥

कोरकं निजकरेण विवृण्वन् शृङ्गकण्ठमथ वेष्टयमानः ।
श्रावयन् किलकिलां खगरावैर्भां दधच्च जनरागरागतः ॥१६॥

क्रीडति स्म गगनाङ्गणमध्ये बालकोभिनवमो दिनेश्वरः ।
स्वं निपात्य सलिले तटवत्या आयति स्म चपलोद्गति खं सः ॥१७॥

तादृशं स्म भवति क्रिया द्वयं सुन्दरं परमगोपनं तथा ।
एकदैव स यथावलोक्यत पुष्करे च सलिले च दिनेशः ॥१८॥

निम्नगा ददृशिरे तडगाश्च कामनीयकनिकेतनमेतत् ।
निर्निमेषमुदघाटयन् निजं सस्पृहत्वपिशुनं जलजाक्षि ॥१९॥

आहितुण्डिक इवाण्डजनादैर्वादयन् स सुषिरं मधुकालः ।
ऊर्मिलास्यफणभृत्फणेभरत् कम्पनं परविलाससंयुतम् ॥२०॥

किन्तु तत्परतरच्छवेः कृते गण्डदेशपिटकोभवदन्यः ।
आहतं च पिटकोपरि तीव्रं क्षारकश्च बहुराहतार्पितः ॥२१॥

सा चकार निजचेतसि लुण्ठारक्तपातदुरितैः प्रकोपितः ।
आहतं व्यथित मस्तकमर्कः खेप्सु च प्रसरति स्म यतोस्रम् ॥२२॥

शोणितं सुरगणा उत भ्रांत्या व्योममध्य उपचित्य समस्तम् ।
तद्दिदर्शयिषवोऽघसञ्चयं प्रायतन्त रिपुमण्डलार्जितम् ॥२३॥

कृन्तति प्रतिभयः समयो मे व्योम च द्रवति भक्षणहेतोः ।
भूरियं वदति यत्सुषमेति सा हलाहलशिखा हि भीषणा ॥२४॥

विप्रयोगरजनी सरणी सा चातुरी तरुचयो गदा चला ।
तस्य शङ्कुरमितं खरो दलः पक्षवान् रविसुतः सहुङ्कृतिः ॥२५॥

तालवृन्तमनिलस्तपराशिवर्धकं व्यथयति प्रतिक्षणम् ।
गन्ध उद्धततरश्च तदीयो नासिकेर्मरचने गतक्षणः ॥२६॥

वल्लरी च विटपाङ्गुलिलास्यैः काकुपूर्णकलितस्मितलग्ना ।
दर्शयत्यतितरां च मरन्दः कण्ठरोधनहतस्य दृगाभाम् ॥२७॥

तारका ददति काकरुतेन सूचनामरिदले सुगोपनाम् ।
गूढता स्फुरणमस्ति तदीया ता ध्रुवं चरसमूहनेत्रयः ॥२८॥

वृक्षकाः सुमनसां निकुरुम्बैः पामरा उपहसन्ति न उच्चैः ।
युज्यते सकलमेव भवत्सु यद् गुरुर्हि स शितिः शिलीमुखः ॥२९॥

गुञ्जितेन सततं स करोति कालमेव पतितो ह्युपदेशम् ।
कारणादयति भिन्नतां क्वचित् कार्यमत्र पृथिवौ गुणावलौ ॥३०॥

आम्र एव बत कीदृशः खलो मुष्टिना फलमिषाद् भयकारी ।
आव्रजन्घिनतिमाहतिहेतोश्चेतसा वहति नो भयं क्वचित् ॥३१॥

लोचनैरुपहसन्ति तटाकान्यापगाश्च लहरीचलदब्जैः ।
वर्त्तते प्रकृतिरद्य न एव वेधनेन निशितेन शरेण ॥३२॥

इत्यमन्यत जडत्वकुण्ठिते राजपत्न्यहह जीवचेतने ।
चक्षुषी विदलिते इवाभवद् गोचरो न सरणिर्मनागपि ॥३३॥

भूप्रकम्पविगलत्समाधिवत् सार्धमानतमगुर्जनास्तया ।
सुप्रियस्य तरुणस्य मृतस्य प्रेतकृत्यमिव साधितवन्तः ॥३४॥

सैनिकैर्निजगणैरचलत्सा तद्दलं हि शुशुभे पुरः पतत् ।
मेरुतोवतरति स्म विभासा सा यथा मुनिजनैररुन्धती ॥३५॥

आपतद् विलगतामथ दुर्गादुर्गरूपयुगलं शुभच्छवेः ।
देहिनोपगतवानुत देहः शेषतां गतवती स्मृतिरेव ॥३६॥

सा दधौ पुरुषवेशमुज्ज्वलं सिंहसंहननमात्मभूच्छलम् ।
आकृतिं रतिरवाप यथा सा चिन्तनेन दयितस्य परेण ॥३७॥

संयमी जनक एज्जनकाभः स्वे तथा गुणगणालयाः समम् ।
सा च तज्जनयिता च जनश्च श्रीतपःश्रमसमा विरेजिरे ॥३८॥

अश्वपृष्ठमधिरुह्य समस्ता उद्यता दद्दशिरे निजकृत्ये ।
जीवनानि जगतः कृतेलसन् सापवादमहितस्य तु कालाः ॥३९॥

सर्व एव भटनायकोभवत् प्राभवत् परशतैरपि योद्धुम् ।
येन च प्रतिभटा निपातिता झञ्झयास्थिरतरा इव वृक्षाः ॥४०॥

ते ह्यधिष्ठितहया नृपपत्न्याः शूलिनः शुशुभिरे भटराजाः ।
साहसं रिपुकिरेरभवद्यत् सम्मुखं पतित आपतेत्क्वचित् ॥४१॥

दीपिताः परिकरे बहुसूक्ष्मक्षौमतोधिकमनोहरमुद्राः ।
खण्ड एव किमवातरदल्पस्तारकाखचितखस्य मञ्जुलः ॥४२॥

संख्यया प्रतिभयोद्धतक्रियं सादिनां द्विनिहतं शतं गतम् ।
आननेन सरलं ह्यतिमात्रं कर्मणा प्रलय एव रिपूणाम् ॥४३॥

गच्छति स्म करटी तदन्तरे धारिताशितिदुकूलमनोज्ञः ।
भ्राजते स्म सुरकुञ्जरो यथैद्ध दैत्यसङ्घदलनाय महेद्धः ॥४४॥

नागराजनरवाहनपङ्क्ती पार्श्वभूदथ दधत्करपाशम् ।
रत्नसंहतिविभाकिरणाल्या भास्करोभवदनल्पविक्रमः ॥४५॥

तीक्ष्ण्यदैर्घ्यपरिणाहसमृद्धां देहभां दिशि दिशि व्यसारयत् ।
मन्दरोधिगतकौशिकपक्षो लब्धवानिव पुनश्चरतां स्वाम् ॥४६॥

अङ्घ्रिरङ्गदधदाप दृढत्वं स्तम्भवत्परमपीवरतां च ।
उच्छ्रयं तनुरिता द्विभूमिकगेहवद् गुरुतरा सविस्तृतिः ॥४७॥

अग्रतोऽस्ति किमु पृष्ठतः किमु लाङ्गुलं त्विति न कोऽप्यबुध्यत ।
ज्ञायते स्म फलमेव विलोक्य तत्कृतिः सुनयवत् फलदात्री ॥४८॥

सुन्दरे वपुषि भूपतिपत्न्या धातुतन्तुविहितं तनुवारम् ।
वर्त्तते स्म परमामसौ यतो जालमध्यगतमीनसमामिता ॥४९॥

आयुधं प्रलयकारि वलग्ने साकरोद् विजयशोभितपार्श्वा ।
आगतेव समरे जयलक्ष्मीर्लक्ष्मजातमिदमाप्य शरीरे ॥५०॥

सा बबन्ध कृतकं तनयं स्वं पृष्ठभाग उदयन्ममकारा ।
कौशिकेन वसनेन रमेण मञ्जिमानमसितं दधार यत् ॥५१॥

नाकरोत्किमपि सा धनचिन्तां किं धनं समरकौतुकवत्याः ।
राजतं न्यधित केवलं सुतक्षीरपानचषकं पटाञ्चले ॥५२॥

सिंहरातिमृगयोर्दले दले ताण्डवं प्रलयकारि विधित्सुः ।
सा दधाव च चकार संभ्रमं व्यस्मरज्जयमदं स विस्मितः ॥५३॥

धारयस्व जहि मा पलायतां पारितोषिकमिदं मणिजातम् ।
आयतावबसरो न यदि स्याच्छिन्धि भिन्धि हतमाहतं कुरु ॥५४॥

इत्यभूद् रवशतेन खं धरा घोरशब्दमयसंभ्रमयुक्ते ।
ईक्षणाविषयतां निमिषेण सा गता विफलयन्त्यरियत्नान् ॥५५॥

खड्गकर्त्तरिकया नृपाङ्गना लूनशत्रुदलजङ्गलावनिः ।
आत्मसैन्यसहिता कुशलात्मा पारमाप सरितो मुदाधिका ॥५६॥

कौशलं तदतिमाप्यदर्शयत् प्राक् प्रदर्श्य यदियाय स टोपेः ।
तद्द्वयीमिति विचिन्त्य रिपूणां मण्डलं भयविदीर्णमभूत्तत् ॥५७॥

यावदेव निरियाय भुशुण्डीनालिकाविवरतो गुलिकाली ।
तावदेव ददती द्विषते सा विस्मयं परमियाय योजनम् ॥५८॥

दुर्गया हरिमधिष्ठितया क्षुत्क्षामया चिरमधाव्यविश्रमम् ।
चिन्तया रहितया तनुमत्या पथ्यभूयत तया श्रमश्रिया ॥५९॥

भाण्ड ईरविरतौ स्थिता ततस्तातपुत्रभटचिन्तया शुभा ।
दत्तभोजनजला सकलाय प्रस्थिताप्यकृतभोजनैव सा ॥६०॥

पृष्ठतो ददृशिरे रजांस्यतः शत्रुसादिनिकरोऽस्त्यनुलग्नः ।
इत्यवेत्य निपुणा स्वकरेण साम्प्रशन्त्यवददश्वपुङ्गवम् ॥६१॥

धाव धाव सपदि प्रकुलिन् हे पार्ष्णिनेरयति वत्स जनोऽयम् ।
आपतेद् यदि रिपुस्तदन्तरे दालयाङ्घ्रिभिरनल्पकोपनः ॥६२॥

चातुरीं तव कृपाण दर्शयाम्युष्णतां कलय दीप्र यथेच्छम् ।
इत्युवाच च नृपस्त्र्यलासयत् कालजिह्वरसनं करवालम् ॥६३॥

उक्तवत्यथ सुतं भयं कुरु मा तनूज तनुजोऽसि न लक्ष्म्याः ।
पश्य पश्य रिपुसंहृतिं करोम्याप्लुतां रुधिरधारया पराम् ॥६४॥

वोकरोरिनिकरोद्भटो झटित्यापतन्नृपजनीं तदन्तरे ।
स स्पृशञ्छिशुरिव क्षणप्रभां वालिशोऽलभत सुन्दरं फलम् ॥६५॥

धूयमान उदगाद् वत कालीभ्रूविलास इव सच्छवेरसिः ।
शिक्षितोऽपि सुतरां स वोकरघोटको निपतितः क्षितिपृष्ठे ॥६६॥

दर्शनीयमभवत्तदाननं लूयते स्म रसना दशनाल्या ।
खञ्जतां श्वदयितानि ददन्ति खण्डतां खडितिकृत्य परापुः ॥६७॥

विंशतिर्निमिषमेव सादिनां सन्मतेरभिपपात शत्रुषु ।
तान् विधाय निहतानरीन् परां ते यथेष्टसरणिं प्रतस्थिरे ॥६८॥

योधनाय किमलं सचेतनाः शौर्यभावरहिता असुहीनाः ।
युद्धमत्ततरचालनाय ते पामराः क्वचन किं प्रभवन्ति ॥६९॥

स्वैः समं तुरगिभिः स वोकरः पापिभिर्बहुतरं तिरस्कृतः ।
विन्यवर्त्तत निजं प्रति कोपं धारयन्नपयशः परमुप्त्वा ॥७०॥

प्राक् कृतं सममवेत्य लघीयः सा श्रमे पुनरभोजना रता ।
त्यक्तसर्वसुखसार्थमपर्णा मानिनी ह्यनुचकार पूर्णतः ॥७१॥

सैनिकाः स्म इतस्ततोभवन् भग्नतामुपगता मनोरथाः ।
विभ्रमो विपदि हन्त निविष्टः कर्णचक्रमिव कर्दमे पुरा ॥७२॥

अन्त्यतां न विपदापतत् परं त्वेति याति च न सा ह्यसहाया ।
नीतिबोधकुशला खलु लोके किं न दर्शयति तन्निदर्शनम् ॥७३॥

कालपीं सकुशलं गमयित्वा वैनतेय इव सैन्धवो रये ।
पूर्णलक्ष्य उदगात् सुरलोकं खण्ड्यमाननृपतिप्रियाधृतिः ॥७४॥

अक्षिणी बहिरुपागते अहो फेणकं बहु मुखान्निरगच्छत् ।
खेदभूतविकृताननभङ्ग्या कोपयन्निव रिपूनतिमात्रम् ॥७५॥

अकृषि न ते बत कामपि सेवां सपदि च यामि विसृज्य धरित्रीम् ।
अघमलिनोस्मि परः प्रसवित्रि किमपि न तृप्तिमियाय मदाशा ॥७६॥

पुनरपि लब्धजनिर्जगतीह जननि भवानि सदायि भवानि ।
तनुज इवामितवत्सिमपात्र-मिति चरमो मम देव्यभिलाषः ॥७७॥

इतीव स वदंस्तया चपलया दशायाद् दिव-
मनभ्रगगनाच्च्युतः प्रतिहताक्षिदीप्तिः पविः ।
यदन्नमवनीप्रभोर्हरिवरः स्म खादत्यहो
स आचरितवांस्तदा तदनुकूलमुद्यच्छविः ॥७८॥

• • •

## सर्गः सप्तदशः

नियतो बत शोक एव मे शमनं हन्त मयास्ति दुर्लभम् ।
नियतौ मम शोक एव हा तदुदन्तस्तदवेक्षणं ध्रुवम् ॥१॥

इय शैशवतः सुसङ्गतं तव कैशोर्ययुवत्वपुष्टिमत् ।
स्मृतिमात्रमितं सहायता मम कश्चिन्न भुवीह वीक्ष्यते ॥२॥

तव केवलमर्दनं कृतमसि पापग्रहतुल्य आर्त्तिदः ।
निमिषेण विनाशयस्यहो द्रुहिणाशाभवनानि नः सदा ॥३॥

विदितं विदितं सदा मृतिर् ह्यविवादामृतिरेव भूतले ।
असुधारणमस्ति केवलं क्षणजीवं मृतिसिद्धिपोषकम् ॥४॥

कथयेतरथा तदापतेद् विलयं सङ्गतमीदृशं कथम् ।
मिलनं खलु विस्मयाकरो विरहस्तु प्रकृतिस्थतां गतः ॥५॥

यमुदाहरतीह विस्मय इति साधारण एव स क्वचित् ।
बलवान् किमियान् विपर्यय उदितं सर्वमिदं कृतान्ततः ॥६॥

निजपाणिकृतप्रसाधनं व्यलसं त्वामधिरुह्य कीदृशम् ।
अगदन् समुदा जना मनः किमिदं यौवनलक्ष्म्यधिष्ठितम् ॥७॥

अवदन् गिरिजेति मां जना जवन त्वां हरिमेव वाहनम् ।
परमाणुमिमं जनं गिरिं न गिरिं त्वां परमाणुमूचिरे ॥८॥

इय एव यदप्यभूः कणो मृगराजोपि न ते बभूव किम् ।
महिमानमुदाहरेत्कथं मितवर्णामितवर्णनं रसा ॥९॥

पशुयोनिरभूर्मृगेन्द्रवद्धरिनामापि तथा स्म शोभसे ।
तव विक्रमगौरवं परं त्रिजगद्व्यापि न तुल्यतापदम् ॥१०॥

पवनं जवनेन लङ्घयन् ददृशे हन्त पदद्वयं भवान् ।
दधदन्तरधात्स्वरोहिणमतिदीनो गरुडोप्यभूद्यतः ॥११॥

त्रिभिरेव पदैर्जगत्त्रयं परिमायावभिथाव्यथं परम् ।
न बभूविथ वामनो विराड् न च धन्यो महिमाकरो हरे ॥१२॥

हरिनाम यदप्यधाः परं त्वपितीकृत्य हरिं गभीरताम् ।
न सकृत्कृतभूपरिक्रमः पुनरक्लान्तमभूस्तथातुल ॥१३॥

हय सन् रयपूजितो भवान् नभ आक्रम्य यदा स्म गच्छति ।
सुखदो न बभूव वाह ते स हि चुम्बंश्चरणान् वहः कियान् ॥१४॥

अधिकः खलु वाह एष मद् वत वाहादिति मारुतो मृशन् ।
त्वदवेतुमिवामितं रयं चरणद्वारमुपायते स्म मे ॥१५॥

तव धूलिकणाः शफान्नभस्युदडीयन्त यदा नभःस्थितः ।
अकरोत् पवनं विधिस्तदा किमणूंस्तान् गतिसम्भवांस्तव ॥१६॥

रजसो निकरे पदोत्थिते व्यलसस्तात चलंस्तथैव नो ।
असितस्य घनस्य मण्डले हयनागोम्बुजिनीपतेर्यथा ॥१७॥

विपणौ तव सिंहसन्निभं परमं संहननं सलक्षणम् ।
अपि विक्रयगोचरो मम क्रयमकरोन्मनसः स्वलक्षणैः ॥१८॥

सममप्यभविष्यदर्जितं मम वित्तं तव चेदवक्रयः ।
अकरिष्यमहं तव क्रयं विकटं पातयितुं हरे रिपुम् ॥१९॥

नियतं तव पञ्चविंशतिं वणिजा रूप्यशतान्यवक्रयम् ।
श्रुतवत्यमृशं जडो विदमुपलं ना कुपरीक्षकोविदत् ॥२०॥

अधिगत्य धनेन तावता जवनं त्वां कपटं यदाचरम् ।
यदवागणयं च रोहणक्रियया तस्य फलं लभेधुना ॥२१॥

कमनस्तव वर्ण उज्ज्वलो हृदये पूरितवान्मुदम्बुधिम् ।
व्यलसो यशसा समो यशो-महितानां यत इद्धकर्मणाम् ॥२२॥

सटया मितपुष्कराञ्चलः क्वचिदिन्द्राश्वयशः स्म गाहसे ।
चितपीठविभूषणच्छदः क्वचिदिन्द्रायुधतुल्यतामगाः ॥२३॥

प्रतिभाति बभूव चेतको यशसां राशिरिवोच्चितो भवान् ।
दलितारिदलः स्म जीवति म्रियते स्म स्वकदत्तजीवनः ॥२४॥

अभवस्त्वमियान्महोच्छ्रयो यदगाः पारमहो नभोऽम्बुधेः ।
अनयोहितकण्ठमुद्धरन् यमलोकातिथितां महासुखाम् ॥२५॥

परिचिच्चियिष एक एव तन् मम वात्सल्यमुदारजीवन ।
अवलोकनहेतु हेषसे स्म निशि प्राणसमोऽधिमन्दुरम् ॥२६॥

लिलिहे मम वत्स पद्द्वयं भवतो देहमहं यदाप्नुयाम् ।
निरयो मम हाविलोकनमभवच्च त्रिदिवं विलोकनम् ॥२७॥

नयनाम्बुजयुग्ममुज्ज्वलं क इवोन्मील्य विलोकयेत माम् ।
त्वदृते सुखितश्च दुःखितः क इव स्यान्मम सौख्यदुःखतः ॥२८॥

नयनाम्बु मुदुद्भवं वहन् वत को मामभिषेचयिष्यति ।
उपसान्त्वनमश्रुभिर्मम स्वजनः सन् वत कः करिष्यति ॥२९॥

मम कन्थक कं स्मरन्नतो मुदमासादयतामयं जनः ।
समरेषु विलोकयद् गतं वत कस्य स्मयतां दृशोर्द्वयम् ॥३०॥

तनुजोऽपि पितृप्रियः क्वचिन्न हि कुर्यादुपकारमीदृशम् ।
अगमो वत केन पातयन् हिममाशाव्रततीगृहे मम ॥३१॥

तव पल्ययनं कुथा तथा कविकालङ्कृतयश्च तान्यहो ।
सकलान्यभितैर्घनैरयोघटितैस्तैर्निरतानि पीडने ॥३२॥

प्रथमं सुत औरसो गतः कृतमर्मस्थलकृन्तनो बहुः ।
पतिराप ततः परासुतां निहतिः सापि बभूव दुर्दमा ॥३३॥

निपतन्त्यनिशं क्षते क्षतान्यथ गण्डे पिटका भवन्त्यहो ।
लवणं च बहुत्तरोत्तरं पततीहाग उदेत्यमेव किम् ॥३४॥

स्वपनं त्यज जागृहि द्रुतं मृगवद् दर्शय वेगमुद्धुरम् ।
शरणं रुदनं तु केवलं शिरसा नम्रतरेण किं हरे ॥३५॥

सममेव जगद् विलोकये त्वद्दतेश्वाश्वमयं किमापतत् ।
श्व इहास्ति न संशयच्युतं निरुपायो भवतीह हा समः ॥३६॥

कपटं सम एव कुर्वते जगदेतत् कपटस्य धाम हा ।
प्रहरा वसुभिर्मिता अपि सकलाः किं कपटेन वञ्चिताः ॥३७॥

न तदानुचितं तवैव तद् वद तावद् हय मा विमुञ्च माम् ।
सदनं मम शून्यतां यया वपि चित्तं प्रिय चिन्तयाम्यहम् ॥३८॥

त्वमपीतकृशासि कालपि वत कालोस्यसुघातिनी परा ।
अतिथिं प्रति सत्कृतिस्तव किमिदं प्रस्थितवत्यहो स्मृतिम् ॥३९॥

क्षणमप्यवतिष्ठते जनो भुवनं भ्राम्यदयं न वीक्षते ।
नयने भ्रमियन्त्रयन्त्रिते असवश्च भ्रमिजालमज्जिताः ॥४०॥

धरया व्रियतेद्य शून्यता निकुरम्बेण दिशां विहायसा ।
जलहस्तिशतेन गीर्यते हरिलक्षेण जनोयमद्यते ॥४१॥

निर्जने तत्र राज्ञ्यासीदुन्मत्ता शोककर्शिता ।
संज्ञां मुक्त्वा क्षणेनैव पपात धरणीतले ॥४२॥

तडगं समीपतरवर्त्तिनं मृश-
ञ्शिशिरैः कणैश्च कमलैः समुद्धृतैः ।
प्रकृतिं निनाय पवनोक्षमापि सा
करणीयगौरवत उत्थिता नृपा ॥४३॥

• • •

## सर्गोऽष्टादशः

चार आगत उवाच चाम्ब हा नूतना च घटनाशुभा च मे ।
साम्प्रतं स्वहृदयं पवीकुरु श्रोतुमेतदखिलं विपत्परम् ॥१॥

बुध्यते स्म मतिमत्तरा समं तं क्रमं सपदि कम्पिता परम् ।
शीघ्रमेव कथयेति सा पुना रुद्धकण्ठमवदन् नृपाङ्गना ॥२॥

सोवदन्न जगतीह ते पिता विद्यते नियमवान् भटेश्वरः ।
सा जहार दतिया तमीश्वरि भूशयास्ति सकलापि कामना ॥३॥

जीवनं स तृणयन् विवेश तामीर्मकोषसहितः पुरीमभीः ।
आश्रयं सचिवमाप्य शीलवान् प्रत्ययं व्यधित तत्र कूटिनि ॥४॥

राष्ट्रनाशनिरतो हि रक्षको भक्षकः स सचिवाधमोभवत् ।
लुण्ठिताखिलधनं समार्पयज्जन्मदं तव सिताङ्गशासके ॥५॥

नीतवान् स सितनायको द्रुतं नीचकर्मनिरतः पुरीं तव ।
उद्बबन्ध खलतां प्रदर्शयन् सद्मनः पुरत एव तस्य तम् ।६॥

द्राग्गताब्जवदना विसञ्ज्ञतां संसरज्जडतरत्वमाप दृक् ।
दुद्रुवुः परिजनाः कुटुम्बिनः सर्व एव दधतो दृगार्द्रताम् ॥७॥

सोढवत्यहह किं न पीडनमाधिभौतिकमथाधिदैविकम् ।
मन्यतेधिकतरं तपोरुजं वैभवात्परतरान्मनस्विनी ॥८॥

गाढवत्यमृतमेषका तु यत् तज्जगत्सु सकलेषु दुर्लभम् ।
नीवृदर्थमघृणोच्च यन्मृतिमर्णवर्णि प्रविचलेद् व्रतं न तत् ॥९॥

प्रस्तराश्चरणताडिताः कति रत्नतां न गमिता नृपस्त्रिया ।
धूलयश्च पदपीडिताः कति स्वर्णतां न गमिता नृपस्त्रिया ॥१०॥

पश्य हन्त पतिहीनतां गता वर्त्तते सुवदनानलङ्कृतिः ।
सूनुरप्यरहयत्स औरसो लब्धवानहिततामिमां प्रति ॥११॥

पुत्रवत्सततमेव वत्सिमभाजनं स विरहय्य हन्त हा ।
घोटकोपि सुरनीवृतं गतः पूजयन्नसुसुमैः प्रसूमिमाम् ॥१२॥

जायते भयमिदं यदीदृशी सोढपीडनशता महाव्रता ।
तापसञ्चयपरीतविग्रहा यातनाशतवृता दिवानिशम् ॥१३॥

शीघ्रमेव शलभायते विमुक्त्यग्निजालपतनातुरान्तरा ।
वातुला भवति वातुलाकृतिर्मात्रयापि न पराप्य शान्तताम् ॥१४॥

तप्यमानवपुषा मुहुर्मुहुर्यास्यति त्वरितमेव स्वःपुरम् ।
कोपनेन दहता समं जनिं प्राप्य वज्र उदितो भविष्यति ॥१५॥

शत्रुसंहतिकृते जनौ जनौ कालतां प्रतिभया गमिष्यति ।
मुक्तिदीप उदयच्छिखो न किं प्राप्य सच्छविमिमां लसिष्यति ॥१६॥

भीष्म उद्धुरतरः स शात्रवोप्यस्तु नाम कलितापदापि किम् ।
अम्बया न निहतीभविष्यते केन वात्र नृपया भविष्यते ॥१७॥

लक्ष्म्युमे अभिधया नृपाङ्गना कर्मणा च सुमुखी विराजते ।
जानकी च विहितेन वेधसो निर्दयेन करुणातनूमती ॥१८॥

इत्युवाच जनसंहतिः पुनर्मस्तकं धृतरुजाल्यताडयत् ।
आननं व्यधित वर्णनिर्धनं विग्रहं च जडतानिकेतनम् ॥१९॥

भालदेश उदयद्वलीयुतः स्वां व्यथां ततरामदर्शयत् ।
स्वेदवारितटिनीनिमज्जितं सर्वमाकुलमभूत्कलेवरम् ॥२०॥

किं रसातलमगाज्जलीभवन्त्याकुला जलधिनन्दिनी क्षितेः ।
वीक्षितुं निमिषमप्यपारयन्त्युत्कटाघवलितामिमां क्षमाम् ॥२१॥

यत्र कैतवमितं कणं कणं वर्त्तते च परिपीडनं सदा ।
मानवः कशिपुमात्रवञ्चितो लाञ्छनानि लभते दिवानिशम् ॥२२॥

तत्र सा कथमहो क्षमा क्षणं स्थातुमेकमपि वारिजासना ।
मानवत्वमनु याति सा सदा नामिषं च रुधिरं च वीक्षते ॥२३॥

तास्माह जरितस्तदैव कोप्यङ्ग वीजयसि वातुलोसि किम् ।
आनय प्रकृतिमाशु मस्तके शीतलाम्बु विनिधाय वा हिमम् ॥२४॥

वारिणा शिशिरतामुपागतं किञ्चन स्फुरितवद् विलोचनम् ।
कम्पिताक्तिसलयोपमाधराद्दुज्जगाम शनकैर्वचोवली ॥२५॥

हे पितर्गमनमिष्टमस्ति ते हेद्दशेप्यवसरे सुवत्सल ।
कुत्सिता कृतिरियं प्रजापतेः कर्त्तुमत्र मनुजोस्ति किं क्षमः ॥२६॥

क्रीडितान्यकरवं तवाङ्कगा ताडयन्त्यविरतं पदे करौ ।
मुग्धलोचनमहो पितः कथं विग्रहे व्यरचयः प्रहर्षणम् ॥२७॥

निद्रिताभमथवा वहन्निव कल्पनासरिति विस्मृतात्मना ।
उक्तवांस्त्वमनया हि दुर्गया नान्यया किमपि भूयते क्वचित् ॥२८॥

पुत्रि दालयति सिंहवाहिनी शात्रवस्य दलमिद्धभा कथम् ।
दर्शयस्व तव वाहनं त्वितस्तिष्ठ तिष्ठ तडिता समा स्फुर ॥२९॥

पारदेशिकगणः खलो युगे वर्त्ततेत्र महिषासुरोपमः ।
मारयाकरुणमेकदैव तं हेङ्गजे मम रणावनौ द्रुतम् ॥३०॥

इत्युवाद बहुधा प्रदाय मे मृत्तिकामृगपतिं महाकृतिम् ।
अग्रया सहितमैरयद् भवान् साहसं प्रति तदैवमब्रवम् ॥३१॥

तान्यहानि गतवन्त्यहं सभं ज्ञानमीषदलभे तदा पितः ।
पाययन्नतुलवत्सिमामृतं प्रायशो जनमिमं त्वमुक्तवान् ॥३२॥

अह्नि यत्र गमयन्त्यतो वहिर्देशतः सिततनूनये सुते ।
त्वं पतिष्यसि रणाङ्गणे जनस्तत्र सान्त्वनमयं गमिष्यति ॥३३॥

आत्मनि प्रभविता न हर्षणं वासिनां सुरनिकेतने पुरः ।
सर्वविस्मरणदोलिकास्थितं हन्त यास्यति मनः कृतार्थताम् ॥३४॥

सम्मुखं मम यदि प्रयासि तद् विस्मराम्यपि शुचं सुतामृतेः ।
आत्मजे कृपणतां प्रतीपयन्नुन्मुखः क्वचिदहं भवामि नो ॥३५॥

इत्युदीरितवचोवलेस्तव कापि कान्तिरुदिताभवन्मुखे ।
आत्मजामरणचर्चयाप्यहो हर्षणाश्रुनिकरं दधार तत् ॥३६॥

ईदृशान् वहति यत्तपोधनान् राष्ट्रमस्ति कृतकृत्यमद्य तत् ।
तान् हरस्यहह रे विधे हत युज्यते त्वयि यदीदृशात्थ रे ॥३७॥

इत्युदीर्णवचसः प्रयत्नतो रुद्धवाष्पपतने अपीक्षणे ।
साश्रुणी स्म भवतः पटीयसी साह्वयत् सलिलहेतु किङ्करम् ॥३८॥

शब्दतोऽन्तरितवत्यहो समां शोकजां कृपणतां परामृशम् ।
किं रुदन्ति विबुधाः कदापि वा साक्षि चेङ्गिजनमेव केवलम् ॥३६॥

सान्त्वना रुदनजा हि गर्हिता स्त्रीजनस्य परमश्च दुर्गुणः ।
मानवस्य चरितस्य हीनता स्याच्छिशोर्यदि गुणः कदाचन ॥४०॥

हृदये गूहितशोका शतमुच्छ्वासांस्त्यजन्त्यमितधीरा ।
श्रुतिपेयां वचनालीमेतामूचे पुनर्वीरा ॥४१॥

यत्रैवासि पितस्त्वं तत्रैवादत्स्व मे नमस्कारम् ।
शूरत्वाम्भोधे त्वं स्वीकुर्वश्रुकुसुमसंभारम् ॥४२॥

आशीर्वचसालङ्कुरु मां प्रलयक्रीडनं विधास्यामि ।
आशीर्वचसालङ्कुरु मां दीपकमद्य गास्यामि ॥४३॥

ज्वालारङ्गक्रीडां समरज्वालावलौ करिष्यामि ।
दासत्वाङ्कं वीरं त्यागाब्धौ मज्जयिष्यामि ॥४४॥

खड्गं शृङ्गं पूर्णं ज्वालारङ्गेण संविधास्यामि ।
भरतक्षितिशिखिचूर्णं शत्रुभ्यो दर्शयिष्यामि ॥४५॥

कृत्रिममग्नेश्चूर्णं किं मेऽहं नैव तत्प्रयोक्ष्यामि ।
अस्यार्चिस्तापेरीन् क्वाथत्वं साद्य नेष्यामि ॥४६॥

नैसर्गिकमाग्नेयं चूर्णं शत्रून् प्रदर्शयिष्यामि ।
तद्विहितानां वृद्धि न्यक्काराणां प्रदास्यामि ॥४७॥

व्योम्नस्तावत् पितस्त्वं क्षणमिव वदनं वत्सलं दर्शयिष्य-
स्येषा गच्छामि युद्धस्थलममितगतिर्दर्शयाम्याजिलीलाम् ।
शर्वर्यां नो शयेहं रणकरणरता कार्यमन्यत्त्यजामि
शान्तिं प्राप्नोमि काञ्चित्स्वमखिलमपि युच्चण्डिकासाद् विधाय ॥४८॥

मध्ये मध्ये गगनमभि मे प्रेषयिष्यामि दृष्टिं
भूत्वा नेत्रातिथिरतितरां तर्पयिष्यस्यमूं त्वम् ।
चन्द्रश्चञ्चूचुलुकमचलं चक्रनाम्नो यथैव
चन्द्रश्चान्द्र्यां चतुरचतुरस्तर्पयत्यात्मभासा ॥४९॥

• • •

## सर्ग ऊनविंशः

व्यलपदतिचिरं सा निर्जनं प्राप्य राज्ञी नयनयुगमसीमं दाहमन्तः पराप ।
अभवदधिकशोथं सापि खिन्नातितान्ता शयनमगमदाशु प्राप निद्रापि सा ताम् ॥१॥

इदमलभत दृष्टिः स्वप्न उन्मुक्तिमाप्ते कलकलमयतास्ते मङ्गलत्वेन राष्ट्रे ।
नवलरुचियुतैन्द्र्यां दिश्युदैद्रक्तमीषा रजनिरपजगाम श्वेतदेहैः सुदूरम् ॥२॥

शिखरिशिखरपृष्ठात्प्राभृतं रत्नपात्रं ललितमुपनयंस्तच्छीघ्रमागात्प्रभातम् ।
अविशदधिधरं तद् नैजराष्ट्रघ्नवृन्दं स्वदुरितभरतान्तं दूयमानं नितान्तम् ॥३॥

खगकलरवदम्भात् कीर्त्तनं वा प्रभातं ससुखशयनपृच्छां वाकरोद् बन्दिवृन्दम् ।
कृतिनिकरमशेषं नैत्यिकं सा विधाय परममवहितात्मा सैन्यसज्जां चकार ॥४॥

रजनिमतिभयां तां तं हयस्यान्त्यकालं जनितृमरणचर्चां वत्सलत्वाहतिं ताम् ।
स्मरणमुपनयन्ती राजपत्नी चकम्पे तडिदिव हृदयाभ्रे कापि पुस्फोर घोरम् ॥५॥

प्रतिनिधिरनुजातः पेशवा द्वारि राव उपगत इति वाचा सात्यजत् तां स्वचिन्ताम् ।
अनुसरणमकार्षीद्विभवं श्रेष्ठनीत्याः प्रणिपतितशिरस्कौ बालकोभूज्जनन्याः ॥६॥

सुचिरमभवतां तौ पूर्वजाख्यानलीनौ परमविमलरूपां प्रेरणां प्राप्तवन्तौ ।
अवहदमितवेगं गौरवामर्त्यसिन्धुर्वलिकुसुमचयाभाः पूर्वजा यत्र दीप्ताः ॥७॥

दधदसिलहरीं तां सिन्धियाः सिन्धुकान्तिः स्फुरणमधिकमाप्तो यातनातीरशत्रुः ।
प्रतिभयलयगायो द्राक् कवाडान्तगायो रिपुगजतिलकाधिर्मुक्तिदुर्गे कवाटः ॥८॥

भरतसमुदयवन्द्यो लाद्दिकोभात्सबुन्देर्वहलविरुदशाली ढोलपूर्वः करः सः ।
पटमुख उदितोभूद्धर्धनोन्वर्थनामा भरतधरणिमुक्तिद्रौपदीरक्षिता सः ॥९॥

लहरिसमुदयाभस्तत्र दीप्रो ध्वजोभूदुदयमलभतोच्चैश्छायया यस्य राष्ट्रम् ।
भरतपृथिविजीवज्योतिरेकं वभूवुः कलितदृढतरैक्या येन राष्ट्रा महाद्याः ॥१०॥

शरणमुपगतो यं क्षात्रधर्मप्रतापः कृतयवनगुरुण्डप्राणकम्पो य इद्धः ।
अटकमपि गतो यद्विक्रमोतुल्यरूपः किमुत क्षुमितसीमं तं महाराष्ट्रदेशम् ॥११॥

कनकमिव सुकम्रं मुक्त्युपाख्यानमासीत् परिमलमिव तत्र प्रापुरेते प्रवीराः ।
अतिशयितसमष्टिर्दिद्युते योग एष कमपि चपलभावं बाहुदण्डो जगाम ॥१२॥

रिपुदनुजसमूहं कृत्तवान् वारलक्षं दिशि दिशि शिखिनं तं भ्राजयन् भीष्मवेगम् ।
प्रणततरशिराः सन् स्वामिनं प्राप्य सेना-पतिरुपगतवांस्तां वन्दितुं राजपत्नीम् ॥१३॥

नयनमविशदेका ह्रीर्नु पार्वेक्षणेन भुवि मणिखचितायामश्रुजालं विरेजे ।
भवति विफलता वै जीर्णजीर्णापि नव्या धरणिरमितशून्या क्वापि लब्धे स्वकीये ॥१४॥

पुनरवहितचित्ता योधने ते बभूवुः प्रतिधमनि ललासोत्साह एको नवीनः ।
प्रतिभटमवदद् द्राग् याहि कौंचं क्लेशः प्रतिपदमतितीव्रं द्यिते विद्युदेका ॥१५॥

पवनसुत हरे त्वं लङ्घयोत्प्लुत्य मार्गं भवतु विदितमेव श्रेष्ठ अध्यान्तरं ना ।
प्रचल सुभटमुण्डं छेत्तुमाश्वद्य कौंचं रिपुजनमहिमानं शीर्णशीर्णं विधाय ॥१६॥

कलकल उदभूद् द्रागृष्टयः कोषमुक्ता वियदसमय एवायोजयन् विद्युदाल्या ।
झणिति खणिति रावं युद्धवाद्यानि कृत्वा सुरपुरमहिलोकं व्याप्तवन्ति प्रकामम् ॥१७॥

पुरत उपगता सा सैनिकानां वहन्ती स्फुरितकरणमङ्गं स्पन्दमानं च वक्षः ।
अरुणवसनदीप्राः सङ्गता अश्ववाराः सुखमपरिमितं तच्चक्षुषोस्तेनिरे ये ॥१८॥

ध्रुवमधिवपुरग्नेर्मालिकां ते वसानाः परिचरणनियोगे स्थापिता युद्धलक्ष्म्याः ।
उत शिवसुततेजो वह्निराशेरुदीर्णमुपगतवदुदग्रं कर्त्तितुं कौञ्चमानम् ॥१९॥

अनमदमितभावं प्राप्य बाँदाधिपालोप्यधिप उपगतोसौ बाननाम्नः पुरस्य ।
अमितमुखमयूखे राजपत्न्याः परीता अविदितनिमिषाक्षिप्रेक्षणे व्यापृतौ तौ ॥२०॥

दशसु गतवतीषूत्तप्तहोरासु तासु रिपुगणमभिपेतुः सैनिका भारतीयाः ।
तपनसहनदीनाः शत्रवो नीतिमेतां मृतिमवगतवन्तस्तीक्ष्णघर्माभिभूताः ॥२१॥

किमपि विधिरभून्नो हा सहायस्तदापि जयमलभत शत्रुर्द्रागनायासमेव ।
किमवनिपतिपत्नी सासहाया विदध्याच्छतमहितजनान् सा मारयित्वा व्यरंसीत् ॥२२॥

भटसमुदयमङ्ग त्वं व्यवस्थापय प्रागहमपि तमितो द्राक् प्रेरये कौशलेन ।
भवतु न सुलभास्मद्वृद्धिरद्येति युक्तं परमुचितमहो किं स्वार्जितस्यापि यानम् ॥२३॥

इति वचनविशेषं तं गदन्ती नृपा स्म त्वरयति मतिमन्तं टोपआख्यं बलेशम् ।
सकलमनयत द्राक् सोऽपि सैन्यं विपश्चो भवति नवलमङ्के जीवनं प्रेरणोच्चा ॥२४॥

अतिमलिनमुखाभं कालपीसैन्यवलं तत्र परमरहयत्सा राजपत्नी जयाशाम् ।
अपरिगणितजीवो नाशनैराश्यजाड्यो भवति च लभतेऽसौ प्राज्यमुत्साहमत्र ॥२५॥

अहह भवसि खिन्नः केन हे राव वन्धो प्रतिनिधिरिनबुद्धेस्तस्य नाना न किं यम् ।
अटहरिमनुयाती क्रान्तिसिंही सनाथा मतिमथ गतिमेकां योऽभरत्तत्र वीरः ॥२६॥

त्यजसि किमिति हा हा शौर्यविश्वासमेकं भवति बलमशेषं सैन्यमीक्षस्व वन्धो ।
श्रयति न विजयश्रीस्तावकं चेत्पदाब्जं न भवति भरतेला स्वस्य दोषोऽस्ति तस्मै ॥२७॥

इति वचनमनङ्कं रावमिद्धं वदन्तीं निरुपमकृतिमेतां दृष्टवन्तः प्रवीराः ।
अहमहमिकया ते तत्पदं स्प्रष्टुमायान् निजजननिमुखं ते मेनिरे तन्मुखाब्जम् ॥२८॥

अनयत विदुलायास्तानि लक्ष्म्या वचांसि प्रतिनिवसथमस्याः सैनिकः सैनिको द्राक् ।
अकृपत वहवस्तद्घोषणं तारमुग्रं पुनरलसदतुल्यं साहसं सैन्यमध्ये ॥२९॥

पुनरुदयमवापुर्वीरहुङ्कारसार्था मरणमसव उग्राः प्राप्तुकामा बभूवुः ।
ज्वलति यदि शिखाग्नेर्भस्ततां दर्शयन्ती निपतति शलभाली किं न तत्राविरामम् ॥३०॥

अभितरुचि चलन्तः कालपीतो भटास्ते चरणयुगलतीर्णक्रोशजाता उदग्राः ।
स्थितिमधिषत योद्धुं स्वानुकूलां गलौल्यामभिपतननिदेशं प्राप्तुमुत्का बभूवुः ॥३१॥

अहितदलनदक्षास्तत्र बभ्रुः प्रवीरा रिपुरुधिरपिपासां वर्धमानां प्रचण्डाम् ।
अगणितजनसङ्ख्यास्मारयत्कुम्भपर्व शितिजलमकरोत्तद् यामुनं किन्तु शङ्काम् ॥३२॥

दिनकरतनये नो देहि कान्तिं सुकान्ते प्रचलसलिलराशे रिष्टये चञ्चलत्वम् ।
झुमिति विहितशब्दे भीतिमुग्रां रिपुभ्यो लहरिभृकुटिभीष्मे भस्मतां च प्रचण्डाम् ॥३३॥

इति भटसमुदायाः भानुजां प्रार्थयन्त प्रथितनति यथा तां प्रार्थयन्ते मुनीशाः ।
बलमनुपमशौर्यं सूर्यजादर्श एकः प्रतिफलमतिरम्या चित्रवीथी बभूवुः ॥३४॥

सह सुविकटकृत्यैः पत्तिभिर् ह्यू गरोजो नयनविषयतामैत्सारकोसौ तत्रैव ।
पुरत उपगतोसौ मेजरोपाधिरोरो महिष इव धरित्रीमङ्घ्रिदीर्णां चकार ॥३५॥

बहुतर उदतिष्ठद्रेणुरापाम्बरं द्राक् शिरसि दुरिततुल्यस्तस्थिवान् स प्रचण्डः ।
उत दुरितिन उर्वी पीड्यमाना निकामं दुरितसमुदयैस्तैर्ध्वंसं प्रार्थनाय ॥३६॥

अहितमभिपपात द्राक् स रोपेर्वलेशस्तडिदिव गतिशीला साभिदुद्राव देवी ।
रणफलमभितोभूद् दृष्टिगम्यं क्षणेन रिपुगण उपयातः स्तब्धतां नष्टवीर्यः ॥३७॥

दलपुटकमवेक्ष्यातापिना छिद्यमानं वहति शिशुरनल्पां भीतिमस्तां यथैव ।
भटशतमवलोक्योत्कृत्तमुण्डं कृपाण्या भयमभजत तद्वद् घोरघोरं गुरुण्डः ॥३८॥

जयतु जयतु रुद्रश्चक्रधारी विधाता जयतु जयतु चण्डी भानुजा राष्ट्रमम्बा ।
जयतु जयतु नाना राव उर्वीशपत्नीत्यदित कलकलो द्राक् शत्रवे ध्वंसमुग्रम् ॥३९॥

तदपि रिपुरुदग्रश्चेष्टते स्म प्रकामं शमननगरयानं निश्चितं मन्यमानः ।
भजतु वत मुमूर्षुः कीदृशीं भीतिमत्तामभिपतित उदीर्णः श्येनवत् सिद्धिमापत् ॥४०॥

घटितमिदमितः किं कूर्दिता हन्त राज्ञी शरसदृशमधावत् तद्धयः शत्रुमौलिम् ।
वचनमिदमवादीत् सा निवृत्त्यालमन्तर्दलय रिपुगणानां श्रेयसेभ्यस्ति मृत्युः ॥४१॥

न भवति रिपुसङ्घो वध्य एषोस्ति नूनं निजकृतिफलमङ्ग प्राप्तवत्पश्यतैतत् ।
विलसति वत घर्मस्तीक्ष्ण उष्णासिधारा नयत समरमध्ये तिष्ठतोर्योकणान् द्राक् ॥४२॥

अधिकशिशिर एषां नीवृदस्त्येत उग्रतपतपनपरीताः कालमेष्यन्ति शीघ्रम् ।
उपरि मिहिरकोपो मारयत्यर्द्धमेनान् नयत नयत शान्तेः पूर्णतां सह्यतापाः ॥४३॥

सपरिधिगतिरुर्वीपालिनी शत्रुमध्ये व्यलसदधिकमश्वः क्रीडति स्माम्बरेण ।
अहितदलमवाप्नोत्स्थायिनीं शान्तिमेकामजयदसुपणे सा प्राग्जिताप्याप्तयत्ना ॥४४॥

अहितगलमकृन्तद् वामतोवामतोपि परिणतमिव धान्यं सञ्चिनोति स्म चाह ।
दमनविषय एषा नो कनीयस्यपीति प्रबलमदलयत्तैर्भारतीयैरातिम् ॥४५॥

तुमुलमुदभवद् द्राग् धाव धावेति घोरं मनसि भयमसीमं शात्रवाणां विवेश ।
मरणदृढमनस्कश्चैकतः पक्ष आसीत् प्रलयमुपगतोभूदेकतोसौ विपक्षः ॥४६॥

यमनगरमगच्छन् द्राक् शतघ्नीनियुक्ता बत मृगयव पवैञ् मृग्यतामाज्यरण्ये ।
अशनमरिरशेषोभूदसेभूं पपत्न्या नयनकलितभीतिर्दृष्ट उत्तानवक्षाः ॥४७॥

मृतिमुपगतवन्तो मृत्युदूता अपीदृधा यमपुरगपतित्वं तच्छतघ्न्योसहायाः ।
भरतधरणिवीरास्तेनिरं स्वाट्टहासं प्रतिरव उदगच्छद् हन्त तत्तोपि चण्डः ॥४८॥

प्रमुदितमनसा पत्कन्दुकाभैः शिरोभिर्बहुतरमरमन्त द्राग्भटा भारतीयाः ।
असिशिखिनमनल्पं सा क्षिपन्त्यग्रतः स्म स्फुरति विदधतीवानीकिनीनायकत्वम् ॥४९॥

तत्रान्तरेभिपतितः सहसा स रोजो ह्यूगादिकः परमविप्लवमाततान ।
राज्ञी बभूव निमिषेण सुदूनचेताः सेना दधे मुखसरोजमवाप्तमौनम् ॥५०॥

क्लान्ता भटा भरतभूम्यवने नियुक्ताः शत्रुव्रजश्च नवशक्तिसमन्वितोभूत् ।
शेषापि सा प्रभवति स्म गुरुण्डसेना योद्धुं विचित्रगतिरस्ति सदा विधाता ॥५१॥

आसीत्समाप्तिमनु सा सकलापि लीला दैवेन किं तु विहितं विपरीतमेव ।
उष्ट्रैः सिताङ्गवलितै रण उष्ट्रकायैर्धूर्तैरलम्भि विधुरे समये सुरक्षा ॥५२॥

द्वाविंशो दिवसो जगाम स मईमासस्य तां वक्रतां
जातो व्यर्थतरो यया स सकलोप्येकः श्रमः सत्वरम् ।
साफल्यं विफलत्वमाप सततं भाग्यस्य कीदृग्गति-
र्भग्ना किं बत मानवस्य भवति क्षोण्यां सदा कल्पना ॥५३॥

यावद् रूढा द्रुमसृतफलस्पर्शमात्रं करोमि
तावद्भग्ना मदसुहरणाकाङ्क्षिणी हन्त शाखा ।
इच्छा पूर्णा भवति न यदा क्वापि मे हे हरेहं
कुर्वे लोके किमिह कथय प्राप्नुवं कां गतिं हा ॥५४॥

ग्वाल्यारम्भं चलत नगरं तद् यरं द्राग् विमुक्ति-
दीपं दीप्रं ज्वलयितुमलं स्याम तत्रैव वीराः ।
ईशो नश्चेद् भवति स पदं तर्ह्यनाद्या अनन्ताः
प्रासिष्यामः पुनरपि गलाद् दास्ययोक्त्रं सयत्नम् ॥५५॥

इत्थं प्रदर्श्य विबुधा निजदूरदृष्टिं सा काल्पीं रहितवत्यभया प्रतस्थे ।
जित्वापि शत्रुनिकरेण पराजयः स्वो ध्वंसं विलोक्य विकटं स्वयमेव मेने ॥५६॥

• • •

## सर्गो विंशः

विचिन्तयामास धराधिपा पथि ममास्ति किं किं करणीयमग्रतः ।
लभामहे क्षेपणतोद्य शिक्षणं दृढत्वमैक्यं च प्रसारयेमहि ॥१॥

जयेम तद् ग्वालियरं पुरं द्रुतं कृतं विलम्बेन विनाशकार्यसौ ।
अहो वता नर्मदया यमस्वसुरिहा हिमाद्रेररिशासनं दृढम् ॥२॥

अहो वयं सम्प्रति भिक्षुका इव सुदुर्लभः काणवराटकोपि यैः ।
क्षुधा च रोगैर्युगपद् विभीषणैः प्रपीड्यमाना अनिशं रुदन्ति ये ॥३॥

न चास्ति दुर्गं न च वाहिनी मम न चापि भक्तं गतसाधना कथम् ।
समाह्वयेहं प्रधनाय शात्रवान्न किं विचारोपि रणस्य मूर्खता ॥४॥

न नास्ति बाहुद्वयमुष्टिरुज्ज्वलो भयं तदा किं सदिहास्ति साधनम् ।
ददाति सिद्धिं भरतावनी जनी तदीयवात्सल्यपरं जनो ह्ययम् ॥५॥

शरीर एकोपि ममात्र यावदस्त्यसृक्कणस्तावदुदीर्णसं यते ।
करेजयो यावदसिश्च केवलेप्यसङ्कटं तावदिदं स्वभूतलम् ॥६॥

अवाप्य पुष्टिं रुधिरेण नौ द्विषो विमुक्तराष्ट्रं समुदं भविष्यति ।
समेषु पञ्चत्वमितेषु सोन्यथा शवानि शासिष्यति देशवासिनाम् ॥७॥

जगाम स ग्वालियरं ममाज्ञया विवर्द्धयन्मुक्तिशिखां बलेश्वरः ।
रणेष्टदीक्षां वितरीष्यति द्रुतं प्रसारयिष्यत्युदयं भटे भटे ॥८॥

अहो स तात्याश्चतुरः कियान् गतो वदन् दिदृक्षुः पितरं प्रयाम्यहम् ।
फलं हि चुम्बिष्यति नः पदद्वयं निराशता स्थातुमलं मनागपि ॥९॥

अहो स नानाः परमोस्ति सेवकः शिवस्य ताना उभयोरिदं मतम् ।
समस्य राष्ट्रार्थं उपर्थवस्थितो भवेन्निजार्थस्तु कदाप्यनागते ॥१०॥

यदेभ चेन्नाकत ऋक्षमानयेद्येत लङ्कां गगनं रसातलम् ।
समाह्वयेतान्तकमात्तरोषमप्यसूनरीणां तनुतो वियोजयेत् ॥११॥

सहाशनं ग्वालियरं सहायुधं सवह्निचूर्णं नगरं विराजते ।
इता स्थितिस्तस्य रणानुकूलतां सहायता दक्षिणतोपि सम्भवेत् ॥१२॥

रयेन रावोपि जगाम हृष्टतामुवाद तात्या अपि साधु साध्विति ।
स्मरास्यलं कौंचपराजयं परन्त्वहो भटानां मतिवैभवं परम् ॥१३॥

कटूक्तिशल्यैरबुधा मिथोऽब्रवन् विजग्रहुर्हन्त नखानखीतमाः ।
तथोचुरेके नृपयाफला वयं परे च वाँदां जगदुः सुकातरम् ॥१४॥

कलिं परं वानजनेन चक्रिरे वचोग्रुवनस्य कृतिः पराजयः ।
समे कुवाक्याः कलहप्रियास्तथा न कोपि भद्रो ददृशे सखाथ वा ॥१५॥

पदातयः प्रोचुरिमेऽश्विनोऽबुधा बहिष्क्रियाभाजनमस्मदुच्चयात् ।
न सादिनोपि स्म भवन्ति मौनिनस्त ऊचिरे यो न रणा भविष्यति ॥१६॥

समेप्यभूवन् स्वयमेव नायकाः परोपदेशो दुरितं परं तथा ।
किमप्यमन्यन्त निजोपनायकं निदिष्टमन्यस्य तिरस्कृतत्वमैत् ॥१७॥

न कश्चिदेको यदि वाहिनीपतिः प्रतीपयेत्कः प्रपलायितं ततः ।
स्वदेश शिक्षस्व वतानुशासनं कदा विजेताननुशासनोभवत् ॥१८॥

बलेश्वरत्वं सम एव वाञ्छति परं हृदैवैतु कथं प्रकाशताम् ।
मनश्च वाणी च कृतिश्च भिन्नतामहो जडानामयते दुरात्मनाम् ॥१९॥

अभून्महापापमियं कलत्रता समत्वमभ्यैति जडत्वलीनताम् ।
मनूपदेशा अगमन्नितो वहिर्नु जन्मदाप्यस्ति लघुर्नरी ह्यहो ॥२०॥

भटः स तात्या अमितोस्ति शोभनः सुदर्शनः शौर्यधनः प्रगल्भवाक् ।
विलोकयिष्यन्ति कुलं भटाः परं न मान्यते हन्त गुणः स्वनीघृति ॥२१॥

ब्रवीत नेता तु रिपोः प्रयाहि चेद् हुताशवर्षा अपि सैनिको विशेत् ।
स्वमस्तकं सम्प्रति कृन्ततेति चेद् वदेद् बलेशः स भटश्चलेन् न हि ॥२२॥

प्रमादतोपि प्रयतारिवाहिनी भवत्यनैक्येषु पविर्भटेषु नः ।
ध्रुवं सहैक्येन मृगा अपि प्रभुं निपातयेयुर्धरणीं मृगद्विषम् ॥२३॥

इतीव राज्ञी विममर्श सव्यथं पराप गोपालपुरं परं रमम् ।
ददर्श तात्या सह रावमात्मना बभूव यो ग्वालियरस्य पेशवाः ॥२४॥

दिनं सुकम्रं वसुपक्षसम्मितं पराप तज्जून इति स्मरन् मुदा ।
अमीनसञ्ज्ञं भवनं भटोच्चयो यथानिदेशं गतवान् निरर्गलः ॥२५॥

भटैः समं गच्छति पेशवा इति निशम्य रोद्धाप्यपयातवान् पथः ।
अरुद्ध योखण्डि स सैनिकैर्द्रुतं सरित्प्रवाहैरिव सेतुरुद्धुरः ॥२६॥

भटाः शतं ग्वालियरस्य सङ्गता जनो जनश्चाप्यमिलत्समागतैः ।
विनिर्मितं मुक्तिसरो यदा कथं पिपासितस्तिष्ठतु दासतार्दितः ॥२७॥

उवाद राज्ञीत भटा जना द्रुतं विभञ्जनीयं निजराष्ट्रबन्धनम् ।
असून् पणीकर्तुमलं य एतु स प्रयातु यः स्निह्यति तत्र कातरः ॥२८॥

स पेशवास्त्वोपजगाम साधनैर्लिखामि शीघ्रं मिल सिन्धिया मया ।
अपेक्ष्यते सम्प्रति ते सहायता स्वतन्त्रताया इह दुर्निवारताम् ॥२९॥

इति प्रसिद्धाक्षरराजि पेशवाः पराप्य पत्रं सचिवेन सिन्धियाः ।
उपात्तचिन्तेन हितैषिणा रिपोर्निरोद्धुमेतान् समनह्यत स्वकान् ॥३०॥

प्रभुर्यमाप स्वयमेव किङ्करस्त्वहो न स प्रत्युदगच्छदाविलः ।
प्रभोर्न मेने प्रभुतामकल्पयद् भयं किमङ्गात्र पदोदकार्पणम् ॥३१॥

स रक्तलीलाघटनाय सिन्धियाः स्वमन्त्रिणा ग्वालियरस्य सीमनि ।
अगान्महोरस्क उदारविग्रहो भटोच्चयोभात् सममायुधोत्तमैः ॥३२॥

जगाद रावो विदुरो यथा हरिं यथा च रामं भरतः पुरा गतः ।
तथैव मामेष उपैति साम्प्रतं महानुरागो मयि सिन्धिया इति ॥३३॥

अहो सभावो विदुरः क्व च क्व च प्रभोर्वराङ्गे भिदुरः पतन्नसौ ।
इति स्मितास्या न्यगदन्नृपाङ्गना बभूव रावोपि विमोहनिर्धनः ॥३४॥

उपेत्य रावः स सुभाबुकोन्यथा वशं व्रजेच् छत्रुवृकस्य सक्षुधः ।
अहो त्रयोविंशतिमेव सच्छवेर्विलोकयन्त्याः शरदां सुबोधता ॥३५॥

जयाजिनामा कुलहा स सिन्धिया असिर्महादाजियशोविधूद्भवः ।
चचाल मुक्तावसितुं महानलमथेतिवृत्तानि निजानि लेखितुम् ॥३६॥

त्रयीं शतानामधिगम्य सादिनां गताग्रमग्रं तनुमत्यभीकृता ।
त्रयीत्वमुद्दामतरेण तेजसा ध्रुवं त्रिलोकीविजिगीषुराप सा ॥३७॥

यदैव तं पापिनमङ्गरक्षकैर्ददर्श राज्ञ्यभ्यपतत् तदैव सा ।
असिर्गतिं सानुचकार तं तथा क्षणप्रभां द्वावपि चानुचक्रतुः ॥३८॥

समक्षमासाद्य विनाशितप्रियं यथा भुजङ्गी तरसानुधावति ।
तथैव राज्ञ्यप्यनुधावति स्मसा स्वहिंसकं ग्वालियरस्य भूभृतम् ॥३९॥

निदिग्धमप्येति बलं न किं मम पदार्थमेवं सुचिरं विमृश्य सः ।
पलायितो हन्त तदप्यरातिना बभूव दासीकृतमेव कूटिना ॥४०॥

रणे बभूवुः कुसुमानि कण्टका दहंस्तथाङ्गारचयोतिशीतलः ।
पराजयं सोङ्गुलिमाल आप्तवान् विनैव रक्तेन दिदेव बुद्धता ॥४१॥

कृपाणधाराव्रतमस्ति योधनं बभूव धारा मधुनः परं तु तत् ।
तदिन्द्रजालं सकला व्यलोकयञ् जगाद राज्ञी बलराज साध्विति ॥४२॥

नृपाकृपाणी त्वभिचारयष्टिका बभूव यत्स्पर्शमवाप्त आगराम् ।
जगाम स ग्वालियराधिपोभजत् पदच्युतोपि त्वरया नृपासनम् ॥४३॥

बभूव झाँस्याः स्मरणे रता सती प्रजा निरीक्ष्याभवदेकवत्सला ।
व्यलोकयंस्ता अपि तां निरन्तरं नृपां सदेहां ममतां तपस्विनीम् ॥४४॥

अलं जनो विश्वसितुं बभूव नो कृताजिलीलानिकरेयमेव सा ।
अभूत्तथान्यैव रणे गते नृपा दधार शान्तिं परमां तपोनिधिः ॥४५॥

यतः क्षुधण्वप्यचलन्न तद्बलं सधान्यकूटायुतमण्डनं बभौ ।
न यस्य चैकापि कपर्दिकाभवत् स एव रावः क्षितिपाल इत्यहो ॥४६॥

रिपुः पलायिष्ट च राज्यवैभवमलभ्यमप्याप च राव आगतः ।
अनुत्तमे तद्गुणतन्त्र आबभौ निजश्च नीवृन्नृपतिर्निजश्च सः ॥४७॥

बभूव रावस्त्वभिषेकमङ्गलप्रमुत्परः सौख्यशये सदावलिः ।
सुखातिरेकः कुपथं प्रवर्त्तयत्यथालसीकृत्य विनाशयत्यपि ॥४८॥

चिचिन्त राज्ञ्येव दशां स्वनीवृतः परं सगन्धाय चुकोप सावशा ।
परोभ्यपप्तन्न इति प्रवक्तुमैच्चरोविशद् भारतभूस्तु सङ्कटम् ॥४९॥

भटा बभूवुः परमालसाश्चला महाकुलाः सन्त इतस्ततोद्रवन् ।
असित्सरुं राज्ञ्यधरत्करेण सा दृढं चचालार्जयितुं यशोमरम् ॥५०॥

जगाम जूही सममेव सज्जितुं मिमेल मुन्दश्च तया ज्वलन्मुखा ।
प्रमुद्भरं या ददृशुर्मृतैरपि रणस्य ता एव मधुत्वमाप्नुवन् ॥५१॥

ततश्च भेर्यः स्तनयित्नुगर्जना मुदाभ्यहन्यन्त रणे तथानकाः ।
भटाः शतघ्न्यो जगृहुः स्वमुत्तरं ददौ विलूयासिररिव्रजाननम् ॥५२॥

हया अहेषन्त शफोद्भवैः स्वरैर्विदारयन्तः श्रवणे च मस्तिकम् ।
गजा अबृंहंश्च मया नटा इव पदैः सुदीर्घैं रणमेदिनीं ममुः ॥५३॥

अवाप राज्ञी निकषैव कोटकीसरायमेषा लघुसैन्यनेतृताम् ।
न हीश्वरी विप्रललाप किञ्चन विचिन्तयन्ती पृतनानुशासनम् ॥५४॥

ममौ मुदा नात्मनि सादिनां नृपां भवेन्न सेनापतिमाप्य तादृशी ।
ततो वशीकर्तुमगात्स्मिथस्तु तां न तु व्यरंसीच्छिलयेव सापगा ॥५५॥

ररक्ष सैन्दूर्यां दिशि योद्धृसंहतिं विना सहायं त्रपयन्त्यरीन् युधि ।
सहाल्पसङ्ख्यैरपि सादिभिर्भयं तृणीकृतासुर्न महारणेविदत् ॥५६॥

सुकातरा अप्यधिभूमिपावलं बभूवुरज्ञा रणतो निवर्त्तने ।
ददाति नेता प्रथमं यदा शिरस्तदा भटाः स्युर्न कथं भयाधनाः ॥५७॥

नृपालिका जूह्यथ मुन्दरद्रवन् समाह्वयन्तैकभटान् सहस्रम् ।
विकासमापत्करपालवारिणि स्मितालयौ वक्त्रकुशेशयत्रयी ॥५८॥

दधुः समस्ता नरवेशमुज्ज्वलं बभूवुराधारशिला बलस्य ताः ।
अशक्नुवन् प्रेक्षितुमप्यरातयो न या यतश्चाप चमूरसूज्जवान् ॥५९॥

स्मिथेन युद्ध्येत भटेन तेन कः परं तु तस्यापि निमज्जितं यशः ।
अमन्यत स्वं बलवत्तरा रिपोर्वाञ्छ चैकैव विजेतुमाशु तम् ॥६०॥

बभूव चण्डी करुणापि देहवत्यगादमं यो भसितत्वमाप सः ।
न शूरतां विग्रहधारिणीमभूत् कदाप्यभिज्ञातुमलं निजोप्यहो ॥६१॥

तदीयवेगेन ददर्श वाहिनी द्वयं कृपाणौ न पदे करौ न च ।
कृपाणमय्येव बभूव सा शनैर्ललास नेत्रप्रतिघातिनी प्रभा ॥६२॥

मुखं तदासीदुत चन्द्रहासभाश्चयोथ वक्षः फलको व्रणप्रियः ।
प्रसाधनं चाङ्गसमूहनं समं बभूव तद् विद्युदलक्ष्यविग्रहम् ॥६३॥

भवानि दुर्गे जयसीति तद्बलं जगाद सश्रद्धमतिप्रहर्षणम् ।
प्रतीयते स्माविरभूद् हिमाद्रिजा स्तुतौ च वृन्दारकसंहती रता ॥६४॥

अराजदुष्णीषमुदात्तफेनभं विसारतुल्योपरि सूचिशिल्पिता ।
शिखोपमं रक्तदुकूलकञ्चुकं ललास तत्राप च वाडवाग्निताम् ॥६५॥

चलः पदायाम उदीर्णमारुतैर्ललास कल्लोल इव प्रभान्वितः ।
दधार हारो मणिरत्नशालितां रराज राजस्त्र्यसिधारयाब्धिमा ॥६६॥

ददर्श मैत्रीवलितेक्षणेन यो स हृष्टतामाप पराप्य रत्नभाम् ।
उपैच्च यो द्वेषमलीमसात्मना स वेपितोभूदवलोक्य वाडवम् ॥६७॥

तडिद्भयः स्यान्न यदीति बालको यथा तडित्तारमपावृतं मुहुः ।
स्पृशत्युपैद् हन्त तथा स्मिथोबुधो नृपादलं घातयुतोप्यनेकशः ॥६८॥

तथैव भूत्वामितयातनाकुलः पराङ्मुखोभूत्स पुनः पुनर्हठी ।
चिराद् व्यरंसीद् भदमुक्तमानसो न दर्शनेप्युत्सहते स्म तां दिशम् ॥६९॥

स्मिथस्य चिच्छेद बलं नृपाल्यसिः परश्वधश्छेत्ति शितो यथा क्षुपम् ।
स वृश्चिकोभूदथ मारुताशनो मृताश्च दष्टा व्यलपंश्च शत्रवः ॥७०॥

बभूव या कीर्त्तिवधूर्नवावृता सदैव जिज्ञासनमात्रगोचरः ।
अनावृताया यशसा प्रभाविता परं कृपाण्या विवृतैव साप्यटत् ॥७१॥

स जून एत् सप्तदशोऽपि वासरः परश्च भग्नुं तत आगतो निजान् ।
बभूव काकोदरसोदरो रिपुः पदाहतो दंशनमात्रजीवनः ॥७२॥

वरं मृतिर्ह्य स्तनमानभङ्गत इतीरयंस्तीव्रयं स्मिथोऽचलत् ।
य आत्मघातात् प्रतिशोधकामनोऽभ्युपैति रोद्धुं क इव क्षमोऽस्ति तम् ॥७३॥

न किं तु वीरः स बभूव सद्रुचेरहो नृमानस्य हतस्य दीनता ।
तयाब्धिरासीद् विवशः स वेलया न यातुमग्रं प्रबभूव तद् द्वयम् ॥७४॥

दधाव रोजोऽपि भयेन कम्पनव्रतेन राज्ञीं प्रति चेतसोन्मुखः ।
सदैव यां स्वप्नगतोऽपि दृष्टवानसून् हरन्तीमुरगीसमप्रभम् ॥७५॥

स पूर्वमेवान्वहरन् नृपाह्वयः सदेङ्गितज्ञानविचक्षणः परः ।
प्रतीयते स्मास्ति हयो न मानवस्ततार चारातिनदीं तरीसमः ॥७६॥

नृपाङ्गनापक्षमवाप्य स ध्रुवं नभः पतित्वा कृतवान् विलैर्युतम् ।
करेण बिभ्रद् रजनौ सुधां शशी प्रपूर्य येषूडुगणं सृजत्यसौ ॥७७॥

शशी न नैव किमङ्गुलीयकप्रभो विली सोऽपि हयो दधत् सुधाम् ।
पदेन चान्द्रीं नवजीवनं सदा क्लमाहतोऽप्याप महारणाङ्गणे ॥७८॥

किमम्बरात्तत्क्षुरकम्पितादुडुव्रजो गलित्वैक उपैद् वसुन्धराम् ।
लतासु वृक्षेषु च पुष्पतामगाद् ददर्श चाप्तान् गगनोन्मुखः सदा ॥७९॥

खुरेण कृत्तान्नभसो नृपाङ्गनामुखे स्थितौ किं मिहिरः शशी गलन् ।
यतो रणे सेद्धकरप्रकाशतामवाप रात्रौ शिशिरात्मतां ततः ॥८०॥

व्यधाद् विधातोत तदीयमाननं दिनेश्वरस्योडुपनेस्तथाणुभिः ।
क्वचिद् यदाभाति महोष्णतायुतः क्वचिद् बिभर्ति त्विषमेकशीतलाम् ॥८१॥

क्लमाक्षमोऽथं तु निधाय मानसे तृतीयमश्वं नवलं निनाय सा ।
पराक्रमेणासन्ये न लक्षणान्यपीक्षितुं तस्य शशाक साक्षणा ॥८२॥

चचाल धूलिच्छलतः प्रतापिताहुताशधूमं गगनं नयन्त्यसौ ।
असिश्च यन्त्रेण समो विना श्रमं प्रवृत्त आसीदरिमुण्डकर्त्तने ॥८३॥

स रोज आयन्मुषितेव पृष्ठतः क्रमेलकिव्यूहयुतो नृपाभटान् ।
चकर्त्त मार्गं कृतवांश्च तां गतः सरोजवक्त्रां निजधान चैककाम् ॥८४॥

करेण वल्गां दधती दृढं परं समासु काष्ठासु विदिद्युते परम् ।
चकार मुण्डैः परिधिं भ्रमन्नसिर्जुगोप यत्रापि च जानकीतुलाम् ॥८५॥

बभूव दाक्षाय्यसमूहभोजनं चमूर्भुशुण्ड्यो विधवा इवाभटाः ।
तथापि राज्ञी जयवातुलान् रिपून् शफैर्हयस्यादलयद् भृशोद्धुरा ॥८६॥

बभार रुण्डं कियतामसृङ्नदीं पपात मुण्डं कियतां न तर्कितम् ।
दधेऽस्त्रशार्टीं द्विषतां क्षता तनुस्तथा बभासे समरो महारुचः ॥८७॥

करेण गृध्रं निहतेषु कोऽप्यहन्ननर्त्तयत्कश्चिदसिं विभाजितम् ।
विनष्टसंज्ञोऽपि जगर्ज कश्चन ददर्श कश्चिच्च निमेषनिर्धनम् ॥८८॥

मिथो भषन्तो भषका उपैत्र शतं सहस्रमापुः कुणपाशना द्रुतम् ।
यमेक आगच्छति यावदद्रवत्तमाथ तावत्कुणपं परो द्रुतम् ॥८९॥

सहस्रमाप्ता अशिवाः शिवास्तनूरवाप्य फेत्कारभयङ्करा अगान् ।
अहो विकृष्टा भुवि जीविता अपि तथाप्यसूनां ममतां न तत्यजुः ॥९०॥

शिरस्यसीनामसहन्त ये क्रुधं समानिता वक्षसि कुन्तताण्डवम् ।
त एव चीत्कारमथाद्य चक्रिरे न मोहमाया मतिगोचरोऽस्त्यहो ॥९१॥

पिशाचिनीसङ्घ उपागमत्ततः समुण्डमालान्त्रविभूषणान्तरः ।
ननर्त्त हर्षध्वनिना रणाङ्गणे विडम्बयन्नायुधचालनैर्भटान् ॥९२॥

ततोऽवहद्रक्तत‍रङ्गिणी परा बभूव यस्याः पुलिनं भटावलिः ।
भ्रमिर्वराङ्गं लहरी विभूषणं तरीः शवोऽथो शफरी दुरासदः ॥९३॥

पलायमाना अगुरायुधाशतां वितिष्ठमानाश्च महायशस्कताम् ।
विभीषिका सा वचसां कथैव नो न कोऽपि यत्राभवदात्मनो वशे ॥९४॥

रणापथे रक्तरसालजासवमदर्शयन् वीरवणिग्जना नवम् ।
विचित्र एषोऽस्ति नरो भयङ्करो रणे भवत्याशु ततः शमाकरः ॥९५॥

निजस्य नास्मासु कदापि घातनं न चापि विश्वस्तजनाय कैतवम् ।
वने महापावनता कणे कणे वरं वयं हीति जगाद पाशवम् ॥९६॥

नृपानुगाः पञ्चदशैव सादिनस्तदापि शिष्टाः स्मितमण्डिताननाः ।
अवार्यतां चक्रगतस्य किं क्वचिद् गताभिमन्योरपि तादृशीं गतिः ॥९७॥

परैः परीता नरपा शतेन सा वलं स्वमेतुं हयमैरयत्परम् ।
दधाव स द्राग् दलयन्नरीन् परं व्यलोकयंस्ते तु तमेव विस्मिताः ॥९८॥

चचाल पाञ्चाल्युपमा निपातयन्त्यरिं तदा कीचकसन्निभं नृपा ।
विचारशून्यं गुलिकाः प्रचालिताः श्ववत् सिताङ्गा अनुधावने रताः ॥९९॥

कराच्च्युतं भक्ष्यमहो प्रतार्य नो जगाम सौभाग्यमहो विधेर्गतिः ।
चुकोप नः श्रीर्विसृजेम भारतमिति ब्रुवन्ति स्म शुचारयो मुहुः ॥१००॥

भुवोमलीकृत्य बभूव मार्जनी रणेऽसिरुर्वीश्वरयोषितस्तदा ।
क्षितावलुण्ठच्च ननर्त्त च द्विषंस्ततो ललज्जे भटमर्दनोऽपि सः ॥१०१॥

प्रयामि हे देव्यपुनर्निवृत्तये नतिं गृहाणेत्यथ शुश्रुवे ध्वनिः ।
नृपा व्यलोकिष्ट यथा सखी गता विहाय सुन्दर्गुलिकाक्षताधिका ॥१०२॥

शिखापरीतं हृदयं दधत्यसौ भवन्त्यहेः फूत्कृतितुल्यभीषणा ।
दधाव तं घातकमाप्तुमीश्वरी भवेदबन्धो न गताखिलः कथम् ॥१०३॥

ततस्तडित्ताडिततुल्यमीरयन्त्यसिं नृपा कालपुरं निनाय तम् ।
शशाम यद्यप्यणु वैरशोधनात् सखीस्मृतिस्त्वाश्वतनोद्भीरताम् ॥१०४॥

न लब्धवांस्तामरिसिङ्घ उद्धुरो जगाम सा घातनसीमतो बहिः ।
विलोक्य मार्गं कुनदीमवोचत हयं निजं लङ्घय वत्स सत्वरम् ॥१०५॥

बहु प्रयत्यापि न सिद्धिमैन्नृपा मुखेन विज्ञोऽपि विमूढमाचरन् ।
हयस्तु चक्रभ्रमितेव शार्करस्तदाट तत्रैव स मण्डलाकृति ॥१०६॥

हरिं गजं वेक्षितवानिवाथवा हरेरवाप्नोदिव गन्धमुत्कटम् ।
व्यलोकतेवोत दवानलं परं जगाम वान्तर्हु तभक्ष्यमण्डलम् ॥१०७॥

अपेक्षितं वल्गितमेकमेव स त्वधात्परं धावनमात्रयोग्यताम् ।
क्षमो भवेद्यत्र समुद्रलङ्घने स तत्र कुर्यात् किमिवाब्भयार्दितः ॥१०८॥

क्षणात् सिताङ्गाः शरतुल्यमाप्नुवन् नृपां न योद्धुं समयागमन्नहो ।
शिवा भवेयुः शतसङ्ख्यका अपि कदापि वीरा न मृगान्तकस्त्रियः ॥१०९॥

प्रचालयन्ती करवालमुज्ज्वलमनाकुलं सा शुशुभे निरन्तरम् ।
समर्पयेत्स्वं रिपवे मनस्विनी न सात्वकाङ्क्षत् सभयान् रिपूनपि ॥११०॥

हयौ मदीयावभविष्यतामहो असीममप्यविधमलङ्घयिष्यताम् ।
अयं मदीयोस्ति महारिपुर्हयः स्व एव युद्धे ह्युपकुर्वते सदा ॥१११॥

किमस्ति राष्ट्रं प्रति घात एतदप्यसुं ददौ ग्वालियरं हयं मयि ।
अहो न विश्वासविघातने पटो मृतोपि लब्धासि शर्मं कदाचन ॥११२॥

सुसन्दभाग्याश्व मदीय सङ्गतिमवाप्तवानप्यसि साहसाधनः ।
स चेतकोभूद् हय एव यच्छफमरीभकुम्भे विलिलेख विश्रुतिम् ॥११३॥

इति ब्रुवत्या अतुलच्छवेः शिरस्यपप्तदुग्रा करवालसंहतिः ।
स्वधारयाभोग इवोष्णवारणं रराज राज्ञ्या उपरि प्रभान्वितम् ॥११४॥

असिः स एकोसिशतेपि न स्थिरो बभूव सैका नृशतेपि नास्थिरा ।
स केवलः सङ्ग्रथितो न्यवारयद् बहूनपि द्विट्ततिरद्रवद् द्रुतम् ॥११५॥

सखे पलायस्व न मर्त्य एषकोस्त्यरिर्यथा नो विमनस्कतामयेत् ।
द्रव द्रव द्रागसवो न किं प्रिया इतीव वाणी व्यसरद् रिपो रिपुम् ।११६॥

तदेक आयादरिराशु पृष्ठतस्तुरङ्गपश्चार्द्धसुगूढविग्रहः ।
प्रदाय धर्मे सुकृते तिलाञ्जलिं शिरस्यमूं हा प्रजहार दुर्दमः ॥११७॥

असौ पतन्त्येव कपोललम्बनमवामकं तच्छिरसोर्द्धमाश्रयत् ।
उवाच च प्राप्नुहि पारितोषिकं प्रसन्नचित्तोलमलं भयेन ते ॥११८॥

ततश्च सा मन्युमरीचिसञ्चयं चकार सम्पिण्डितमाशु यत्र तम् ।
न्यपातयत् खड्गमरौ तडिद्द्वयं यमं मुषल्यक्ष इवैत् स घातकः ॥११९॥

परे नृपायाः कृतिमाकृतिं तथा विलोक्य साविष्टतरा इवैन् रणात् ।
अगान् स्वकास्तां तरलेक्षणाः पतच्छिरोवलम्बं व्यदधुः करं द्रुतम् ॥१२०॥

क्षतत्वमेषा प्रतिरोमकूपमैद् दधार रक्तं विगलन्निरर्गलम् ।
यतश्चकाशे परमुत्तरोत्तरं लता पतद्रक्तकुसुमेव सुन्दरी ॥१२१॥

आसीत्कार्पटिको यतो रणभुवः सामीप्य एव स्थितो
गङ्गादास इति प्रसिद्धविरुदो राष्ट्रे रतात्माग्रणीः ।
दत्त्वा स्वास्तरणं हिमं च सलिलं सोच्छ्वासदैर्घ्यं तदा
भुव्येवोपविवेश सार्त्ति सधमत्कारं समस्तैः समम् ॥१२२॥

अष्टादशाह खलपुङ्गव जूनमासे रोद्यामहे न च दशाह विलोक्यते नः ।
नास्या अभावि तव तुष्टय ईर्मकोपैर्देदीयते हृदयघातशतानि यन्नः ॥१२३॥

वसुप्राणपुराणाख्य
हेशाब्देदं दिनं दधत् ।
उपदां विपदामेतां
ददत्रो धिङ् न लज्जितः ॥१२४॥

• • •

## सर्ग एकविंशः

दासेन रामेण निरीक्ष्यमाणा राज्ञी विसंज्ञा पतिता शयान्तः ।
चित्रैश्चलद्भिः स्फुरितान्तरात्मा स्वप्नायमाना निजगाद सेत्थम् ॥१॥

रोदिष्यहो राम किमेतदात्थ दृष्टास्मि पश्यालमलं रुदित्वा ।
शीर्षं वधान प्रबला हि पीडा कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥२॥

पश्याधुनाप्यत्र ममात्मजो भो वद्धोस्ति पृष्ठोपरि यस्तथैव ।
क्लेशो भवेन्नास्य न चोत्तमाङ्गमानामयेन्मेयमलब्धनामम् ॥३॥

नीत्वा महाराष्ट्रभुवं सदैव गोपायितव्यो रिपुदृष्टितोलम् ।
दुग्धेन भुक्तिस्वरसः सदास्मै शौर्यामृतं च प्रणयेन देये ॥४॥

गौराङ्ग धिक् शीघ्रमपेह्यपेहि तीर्थाम्बुपूतां स्पृश मे तनुं नो ।
अस्मै त्वया पापधनाय दत्ता यच्छान्तता साधु कृतं तदङ्ग ॥५॥

तात्या अहो हा किमिदं करोषि मत्तोपि वन्धो विमुखोसि हन्त ।
क्रन्दस्यहो त्वं किमिदं द्रढीयन्नेतत्तु न त्वय्युपपद्यते हा ॥६॥

आलोकयस्व श्वसिमि प्रसन्ना रोदिष्यसि त्वं मयि संस्थितायाम् ।
दृग्बिन्दुभिः स्नेहपरैस्त्वमेतैः सौख्ये प्रमार्क्ष्यस्यमलं मुखं ते ॥७॥

पश्याय्यरण्यं भ्रमितुं यदा त्वं सीमस्थितं यास्यसि वन्धुरत्न ।
वृक्षास्तदा ते सविलीकृतास्ते दृष्टौ पतिष्यन्ति पदे पदे वै ॥८॥

किं ते स्मृतौ दत्तगुरुण्डसंज्ञैस्तैर्युद्ध्यमाना विपिनाजिभूमौ ।
नानाजिनं त्वां च हितं पराप्य बाणैरहं विद्धवती मदिष्ठान् ॥९॥

श्यामां मृदं तत्र निधाय वन्धो तत्पूरयिष्यस्यखिलं बिलं त्वम् ।
नो चेदरीणां व्रणसंहतिः सा स्यादेव तेपीत्थमनेन किं ते ॥१०॥

हा हा टवित्यार्त्तरवं वितन्वद्रामस्य दृग्भ्यां जलमस्ति कीदृक् ।
भग्ना यतो नीरवता तता सा कीदृक् स एष ध्वनिराकुलो हा ॥११॥

प्रावर्त्तत श्वास उदीर्णभीति कण्ठो गतः शोषमनेकवारम् ।
पारिप्लवः प्राणसमुच्चयोभूद् वाग्गद्गदा निर्गतवत्युदग्रम् ॥१२॥

स्वप्नस्तथैवाचलदाह राज्ञी किं किं शिरो हार्द्रथ मैवमङ्ग ।
दूरीकुरु च्छिद्रयुतं हि पात्रं कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥१३॥

किं ब्रूहाये कानपुरं प्रयामि नानाजिनः सम्प्रति गेहमिद्धम् ।
सन्देशमेतं नय तात रक्षासूत्रं बधान प्रहितं भगिन्या ॥१४।

सा याति देशं तमितोऽद्य बन्धो यस्मान्न कश्चिद् विनिवर्त्ततेङ्ग ।
स्याच्छ्रावणीमात्रमिदं विमुक्तं नेत्राम्बुनागामि समीहते सा ॥१५॥

आरामभूमौ स पुरा द्रुमोभूदस्माभिरारोपित आत्तहर्षैः ।
मुक्त्याख्ययाहूय महाविचारैर्नित्यं फलाशां प्रति बद्धकामैः ॥१६॥

क्रीडाभवत्सा खलु शैशवस्य बद्धा तथा शैशवसीम्ययैत्र ।
तोयं तथापि प्रयतो ददानस्तं मत्कृते पालयसि प्रकामम् ॥१७॥

प्राप्स्याम सन्तोषमनेन पूर्णमालोक्य तं संस्मरणाभ्युपायम् ।
हास्याय कल्पेत मुत्रीह यद् हि स्यात्संग्रहः सोपि कदापि कम्रः ॥१८॥

चण्डाकृतिर्गर्भगृहान्तरस्था मूर्तिस्तु वर्तिष्यत एव चण्ड्याः ।
सा ज्येष्ठबन्धो सततं तथैव शोभेत मुक्त्याहवमन्त्रदात्री ॥१९॥

लप्स्ये कदाचिद् यदि जन्म भूयो गन्तुं यतिष्ये तदवेक्षणाय ।
निर्वर्णयिष्ये जननीं सभावं कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥२०॥

तुभ्यं नमो हे जनयित्रि दुर्गे वक्षोविभेत्रि प्रसभं सुरारेः ।
तुभ्यं नमो देवि जनित्रि सीते तापस्य शापस्य सदा विजेत्रि ॥२१॥

तुभ्यं नमो दाशरथेतिवीर लङ्केशदर्पापनये प्रवीणः ।
तुभ्यं नमो यादववंशनेतः शान्त्यम्बुधेप्याहवसूत्रधार ॥२२॥

वन्दे सदा हे जनपाल सम्राड् धन्या त्वया वै भरतावनीयम् ।
वन्दे सदा जीनदनल्पधैर्यं सम्राडयहो भारतभूरता त्वम् ॥२३॥

वन्दे सदा हे हजरन्मनोज्ञे साकेततेजोसि नृलभ्यशौर्या ।
वन्दे सदा हे हनुमन्तसिंह मालिन्कृतं छिन्धि शिरो रिपूणाम् ॥२४॥

वन्दे सदा हे कुँवर प्रवीर वक्षो दल त्वं गतभीररीणाम् ।
वन्दे सदा त्वाममर प्रधान शीघ्रं विभिन्धि प्रतिवीरशीर्षम् ॥२५॥

वन्दे सदा बानपुरेश तुभ्यं त्वं मर्दनारिव्रजमर्दनोत्कः ।
वन्दे सदा ठक्कुर सैगर त्वां मा स्म क्षतो भूः कुँवरः कदापि ॥२६॥

वन्दे सदानन्द मनस्विसम्राड् भीष्मं रणं ते सततं स्मरामि ।
वन्दे सदा शूर मुहम्मद त्वां रिप्वद्रिपक्षान् सबलेन्द्र कृन्त ॥२७॥

वन्दे सदा माधव वीरनेतराच्छिन्धि गुल्मान्निखिलान् खलानाम् ।
वन्दे सदा त्वां भट रामबख्श स्वातन्त्र्यमत्तोसि परस्त्वमेव ॥२८।

वन्दे सदा त्वामतिशूर रङ्गौः प्रत्युप्तमापातिगलेसि शल्यम् ।
वन्दे सदा त्वानतमौलि मुल्लाः क्रान्तावसि त्वं पथदर्शकेशः ॥२९॥

वन्दे सदा निर्भय खाँनकिंस्ते राष्ट्रे स्वकीये मतिमत्तमस्त्वम् ।
वन्दे सदा सैनिक मङ्गल त्वा देशाभिमानोसि सविग्रहस्त्वम् ॥३०॥

वन्दे सदा त्वाहमद प्रकृष्ट मन्निंस्त्वयैवास्ति पराजितोरिः ।
वन्दे सदा द्विड्द्विरदाङ्कुशालिन्नेकोस्यहो मानव बुद्धिशालिन् ॥३१॥

वन्दे सदा खान रुहेलखण्डवीरास्त्वया वातुलतोग्रतेताः ।
वन्दे सदा हे बुध मौलविंस्त्वा स्यात्सङ्गमः पूततरः प्रयागे ॥३२॥

वन्दे सदा क्रान्तिकरेण मुक्तेः फीरोजशाह ध्वज उन्नतः स्यात् ।
वन्दे सदा वीर पते नरादे खड्गस्तरङ्गेद् गगने च भूमौ ॥३३॥

वन्दे सदा धीर हरे हरान्त मा स्यात्प्रतिष्ठा विधुरा जनन्याः ।
वन्दे सदा खाँन्त महोग्र मम्मूर्मा भीररेरस्तु हरे करी सः ॥३४॥

वन्दे सदा हे रण वीरमुख्य द्राग् दालय त्वं दलनान्त शत्रून् ।
वन्दे सदा हे हरिकृष्ण धाव नाश्येत पापेश्वर आधिदोरिः ॥३५॥

वन्दे सदा क्रान्तिवचःप्रचारे निर्भीक मुल्लात्रय मास्तु शान्तिः ।
वन्दे सदा वीर करीम नेतः केतुर्गयाया हरितो न वाद्य ॥३६॥

वन्दे सदा नादिरखाँ न दण्डमुद्वन्धनात्स्यादधिकं कदापि ।
वन्दे सदा सद्भट बालकृष्ण चिन्ता न कार्यायतिचर्चिनेन ॥३७॥

वन्दे सदा वीर्यसमुद्र टीकास्त्वं मुक्तिमन्त्रस्य वरासि टीका ।
वन्दे सदा वीर चिमाः परीतो गौरैर्यदि स्यान्न भयं कदापि ॥३८॥

वन्दे सदा सानुज वीर बख्शिन् भङ्ग्धि द्रुतं भारतभूमिकाराः ।
वन्दे सदा त्वां वर वीर धीर शोकापुरेशाहर शत्रुशौर्यम् ॥३९॥

वन्दे सदा त्वां निशितो विदूरे ज्वालाप्रसादैतु रणाय खड्गः ।
वन्दे सदा सिंह तफज्जुलासि स्वातन्त्र्यभानुः प्रसृनेद्बुधभानुः ॥४०॥

वन्दे सदा त्वं हसनावसान हे मेहँदिन् मुक्तिसमर्पितासुः ।
वन्दे सदा ज्ञातमथो तदन्यं कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥४१॥

त्वां नौमि संदीपितलोहितोष्मन् सर्वा महाराष्ट्रधरे त्वमग्ने ।
त्वां नौमि हे तत्प्रतिकर्मलग्ने बुन्देलखण्डावनि वीरसूस्त्वम् ॥४२॥

त्वां नौमि झाँसीश्वरि यास्मि काचित्तत्ते कृपाया अवतीर्णमात्रम् ।
त्वां नौमि हे द्वार नमोस्तु कुड्य कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥४३॥

मातः सुपद्मीपिनि नौमि तुभ्यं त्वां प्रत्यजस्रं यमुने नतास्मि ।
अब्धे सरश्च प्रणमाम्यहं वां दुग प्रजापाल नमाम्यलं त्वाम् ॥४४॥

तुभ्यं प्रणामाञ्जलयोयि दिल्लि साकेत ते मे प्रणिपातलक्षम् ।
राष्ट्रस्य वन्देणुमणुं सभावा कण्ठोस्ति शुष्कः सलिलं प्रदेहि ॥४५॥

आगच्छ चात्रोपविश व्रणात्किं पीडा खुदावख्श गता न किञ्चित् ।
मा शाम्य हे गौस पलैः शतघ्नीवान्ताग्निना नश्यतु शत्रुतूलम् ॥४६॥

पश्चारुस्व तात्या वद गौरवर्णाः सन्त्याजिता वै कति जीवलोकम् ।
पश्चो हि धुन्धूस्त्वरयैव वन्धोप्यान्दोलनाग्निर्ज्वलितः समन्तात् ॥४७॥

भ्रातास्त्यहो पश्य सुवीर बालाः किं किं कृतं किं समयो जितो नु ।
आगच्छ राव द्रुतमेव जीयादागच्छ निस्त्रिंशमये गृहाण ॥४८॥

लालूरहो लक्ष्मण किं समस्ता आयान्तु सङ्कोच इहास्ति कीदृक् ।
एतान् क्षणान् कांश्चन यापयामः संभाषणेन क्व पुनर्व्रजेत्कः ॥४९॥

रोदित्यहो वातुल एव सर्वो दृष्टः श्रुतो वा न ममाट्टहासः ।
अश्रूणि हा हा करुणास्ति कीदृग्हाहारवैस्ताडयतोर एवम् ॥५०॥

मुन्दः किमेषा सह हन्त काशी धिग्धिक्कृतं मन्दतथा विकल्पैः ।
पश्चो हि जामे त्वरितं वराकीमाश्लिष्य मां शीतलता भवान्तः ॥५१॥

वात्सल्याम्भोधिमग्नो नभसि पितरहो जालमार्गेण पश्यन्
शोचन्नास्ते किमेषा धृतिहतिरुचिता हन्त शीघ्रं वदैमि ।
प्राणाः सङ्घर्षलग्ना दयितमतितरां न त्यजन्ति स्वराष्ट्रं
राष्ट्रं चाप्याकुलात्म त्यजति न हठतो हन्त सर्वो जनोपि ॥५२॥

सहसा नृपपत्न्यहिङ्कत ध्वरितो धूतरजश्चयाः पुनः ।
अशुपक्षिण आशु लीनतां गतवन्तोह विदीर्णपुष्कराः ॥५३॥

भव लुप्तमणिर्नरोरगः
सुर मोदस्व गृहीततन्मणिः ।
विलपाम्बर दिग्विदह्यथो
करपालाभिनिवेश शोचतम् ॥५४॥

• • •

## सर्गो द्वाविंशतितमः

संसारेस्मिन्नक्षयतु नितरां गौरवोन्नीतभाला
गौरवाते जयतु नितरां कालभूता कराला ।
दत्त्वा रक्तं तरुणमरुणं नाडिशृङ्गेभ्य इद्धं
रक्षित्री सा जयतु नितरां हौलिकानव्यतायाः ॥१॥

आदायोग्रं तरलतरलं साहसासिं स्वकीयं
कृत्वाखेटं जनविवशतापाशवानां समन्तात् ।
विक्रान्तत्वं सिततनुभृतां कीर्त्तिमूलं विनाश्य
लीलाभोगं वत गतवती देवि संहृत्य सर्वम् ॥२॥

रेजेरीणां विभवनिकरोद्दीप्तमार्त्तण्ड उग्रो
योसौ रात्रिन्दिनमविरतं यौवनोल्लासपूर्णः ।
आनीतं ते विरचितचलत्खड्गधाराप्रचारै-
र्झाँसीशानि द्रुततरमहो शीततां साम्प्रतं सः ॥३॥

उप्ते बीजे प्रभवति यथा वृक्षकस्तूर्णमेव
जन्म प्राप्ते मुकुल उपलोद्भासि पुष्पं यथा वा ।
तद्वत्क्षिप्तेनलसमुदये पारतन्त्र्ये त्वयाङ्ग
देशेस्माकं व्यलसदमितं मुक्तिभूतिः समन्तात् ॥४॥

आयातैका सुखपरिणती रक्तमाहात्म्यतस्ते
बाल्यस्फूर्तिर्धृततरुणतागौरवाभूत्सुशीघ्रम् ।
प्रत्यग्रत्वं सममनुभवैर्वार्द्धकीयैः प्रपन्ना
रासायन्यां त्वरितमधिकं सा स्थितौ राजिताभूत् ॥५॥

नारी नारी प्रतिभटनभोधूमकेतुत्वमाप-
दुत्पातोभूत्प्रलयसदृशश्चण्डरूपोविलम्बम् ।
ऊष्माधावत्कतिपयपलैर्लोहिते शीतलेलं
सर्वा पीडा लयमितवती शोषितानां जनानाम् ॥६॥

नेच्छ्यामो दूलाक्छमननगलीं म्लेच्छमेवं वदन्तः
सर्वे बाला असिकुशलतां रेजिरे दर्शयन्तः ।
राजद्रोहे निरतमनसोतेजयंस्तान्युवानः
सम्यग्बृद्धा रणसमुचितां निर्ममुः कल्पनालीम् ॥७॥

योद्धा पुत्रो मम रणकलाकोविदत्वं पराप्तो
योद्धामित्रैरिति जननयः साभिमानं वदन्त्यः ।
ब्रूहि प्रेयन्नयि सुत कथं मारयिष्यस्यरीनि-
त्युत्साहं ताः सततमददुः शौर्यसञ्जीवनाय ॥८॥

रक्तेनैवं धरणिफलकात् पूर्णमुत्थाय सिक्ता-
दुत्सर्गं द्रागधितनु ततः सम्पुपूरेन्नसङ्घः ।
बालाः कर्तुं समरमसकृन्मत्तां दर्शयन्तः
प्रत्यैक्षन्त प्रतिपलमलं वृद्धवाक्यान्यपेक्ष्य ॥९॥

क्वाप्येतत्तन्मरणमभवत्पीडनायातिमात्रं
भूतोकस्मात्स्फुटनरहितो लोककोपाग्निशैलः ।
कुन्ताश्चिन्ताकलनविकला दीप्तिमन्तोपि सन्तः
प्रायः कुण्ठापरिचितमुखा अत्यदूयन्त हन्त ॥१०॥

शोकोद्भ्रान्ता दलितभुजगी चेतनाभूत्प्रजाना-
मुन्मत्ता कं पितृपतिपुरं प्रेषयामीत्यचिन्तत् ।
संचुक्षोभ प्रकृतिहृदयं सर्वदैवातिपीडं
क्रान्त्यङ्कुरो हृदयनिहितो विक्लवोभूदुदेतुम् ॥११॥

एकाकित्वं क्वचिदधिगतं यद्यभूत्तर्हि लोक-
श्चिन्तासुप्तः पथिक इव स स्वप्नमार्गे व्यचारीत् ।
रुद्ध्वा कण्ठं वितथमधिकं मुष्टिसंदंशकेन
रे गौराङ्गाधमपरिषदो नेतरित्यूच उच्चैः ॥१२॥

वेलावृद्धिच्छलत उदधिर्दर्शयामास नैजीं
चित्ताशान्तिं विकलकरणोत्पादितां मत्तभावाम् ।
भ्रूभङ्गानां लहरिमिषतः प्रेक्षयन्त्यो विलासा-
नातङ्कस्य प्रबलमसृजन् कारणं कूलवत्यः ॥१३॥

उच्छ्वासानां प्रतिकणमभूद् भूमिपृष्ठं प्रपूर्णं
तूर्णं शत्रून्प्रति सुविकटं कोपनाग्निं दधार ।
उन्मादेनोच्चलितमभवद्वस्तुजातं समग्रं
शङ्कोद्भूता झगिति धरणिः कम्पितामेष्यतीति ॥१४॥

कस्मान्नाहं सजवमपतं हन्त वैदेशिकेष्वि-
त्येवं व्रीडां मनसि गुरुतां प्रत्युवाहाद्रिराजः ।
जातं शापाधिकतरमहो तस्य लब्धोन्नतित्वं
यत्राभीष्टं निपतनमपि प्राप्तवद् दुर्लभत्वम् ॥१५॥

देवेन्द्रो मामहह यदि नो पक्षहीनं व्यधास्य-
च्चण्डोदास्थं प्रतिहतिशतान्यातयायिव्रजाय ।
चिन्तित्वैवं न हि हितकरश्चिन्तितोऽस्मेति मत्वा
शान्तीकर्तुं विटपिविटपै रुधवांस्तालवृन्तैः ॥१६॥

राज्ञ्या भस्माल्यपतदणुभिर्नीलिभैरम्बराय
शीघ्रं हृद्यं वितरितवती नीलवर्णाम्बरत्वम् ।
सङ्कल्पानां निचयमकरोत्साहसैकव्रताना-
मुद्दीप्राभं ध्वज इव सदा प्रेरणादायिनी सा ॥१७॥

झाँसीश्वर्या मरणदिवसं मारुतो यद्व्यलापी-
त्सीत्कारं तज्जनितमसकृद् वान्करोति प्रकामम् ।
तज्जैवाभूदतिशिथिलता व्याप्य सर्वत्र यासौ
दत्ते तस्मिन् स्खलनमधिकं सर्वदाद्यापि वात ॥१८॥

वात्याव्याजात्सणिति गुलिकाध्वानमुच्चैर्दधानो
वातश्चण्डं तदनुकुरुते दृश्यमद्यापि धावन् ।
फूत्कारैश्च भ्रमति सततं तान् गुरुण्डानराती-
नन्विच्छन्ये व्यधिषत जनीरक्ततो रङ्गलीलाम् ॥१९॥

शोकाल्लक्ष्म्या विरहजनितात्खं बभूवातिशून्य-
मौदासीन्यं नियमधनवद् धारयामास नित्यम् ।
कुर्वाणोऽग्निर्धगदिति समीभूय दावानलेन
राज्ञ्या साकं असितमभवत्क्लेशभाराभिभूतः ॥२०॥

देहं सारं रुधिरममितं सेचनं सम्प्रदाय
यं हे देवि प्रयतनशतैर्वर्धयामासिथ त्वम् ।
अत्युच्छायः स्पृशति सततं मुक्तिवृक्षः स एव
स्वीयैरग्रैः सुजनहृदयं का कथा पुष्करस्य ॥२१॥

शाखास्तस्य त्रिभुवनतताः पश्य झाँसीष्टदेवि
च्छाया कीदृक्लसति हृदयप्राङ्गणे रम्यरूपा ।
कीदृक् कम्रं वहति मधुतावाहिनी दुर्निवारा
निर्गच्छन्ती फलसमुदयात्पाककोटिप्ररूढात् ॥२२॥

सम्बन्धं हे जननि नितरां स्निग्धमुत्पाद्य तत्त्वं
गच्छन्तीत्थं पिशुनयसि यद् भङ्गुरा प्राणवृत्तिः ।
किन्तु ब्रूहि प्रसविनि कथं स्वं समाश्वासयामः
क्षोण्यां देहं दधतु तनयास्तावकीनाः कथं वा ॥२३॥

सर्वे मातर्नयनसलिलद्वीपवत्यां निमग्ना
हा हा सर्वो विगलतितमां मुक्तिहासोपि कुण्ठाम् ।
शोकध्वान्तोनुभवविषयीभूय सर्वस्य चित्ते
हर्षोद्वेगं सममतितरां सत्रपं द्राक्करोति ॥२४॥

पीडां घोरां विलिखितवती यां पतन्ती हृदि त्वं
म्लानत्वं यद्वदनकमलं ते समावृत्य तस्थौ ।
सन्तानेपि प्रकटितगुणे ते दधाते भयं नः
सर्वत्रात्र प्रतिपलमलं हन्त सञ्चारशीले ॥२५॥

एवंकारं स्फुरति हृदये भाव एकः कदाचि-
च्चित्ते किं मे स्मृतिमुपगतं क्रन्दनं नन्दनं वा ।
प्राणागारं प्रविशति महावेपनप्राघुणो द्रा-
ग्धत्ते देहो नवलसुषमं कञ्चुकं हर्षरूपम् ॥२६॥

एतत्सर्वं स्मरणकरणं केवलं वीरताया
मा मा भूस्त्वं भ्रमपरिगता स्मारकं मन्यमाना ।
दिव्यं भव्यं तव जननि हे स्मारकं शौर्यमेव
किं स्यात्कर्त्रद्वयगुणनिधेः स्मारकत्वस्य तस्य ॥२७॥

भक्त्याः पूर्णश्चरणकमले तावकीने नमामि
गाथां कृत्वाधिगतशमनस्तत्त्वयोरेव चिह्नम् ।
तत्कीर्त्तिर्वायविदितमृतिः सृष्टमेतत्ततो मे
नेतुः सर्वं गुणमविकलं नानुगन्ताप्नुयान्नो ॥२८॥

व्रणभरेण यथा विकलापि सा सुदृढभावमधत्त जनेश्वरी ।
पठक तन्मरणेन तथा वयं सुकृतमेव दधीमहि सर्वथा ॥२९॥

अनेनैवावसादं स्वं मुञ्चे दल्पं नृपाङ्गना ।
इदमेवान्तरेस्माकं सन्तुष्टिः स्यात् कथञ्चन ॥३०॥

शास्त्रिःवरत्वं क्षयमाप्नुयाद् ध्रुवं
स्वातन्त्र्यशक्तिर्जयमाप्नुयाद् ध्रुवम् ।
स्वत्वापहर्त्ता क्षयमाप्नुयाद् ध्रुवं
साम्यप्ररोहो जयमाप्नुयाद् ध्रुवम् ॥३१॥

• • •

# पाठसंशोधनं

## क्वचिन्नूतनपाठादिकं च ।

[ सर्वत्र द्धस्थाने "द्‌ध" इति पठनीयम् ।

प० = पद्यक्रमः । अ० = अशुद्‌धम् । शु० = शुद्‌धम् । × = निष्कासनीयम् ।

| प० | अ० | शु० |
|---|---|---|
| | सर्गः १ | |
| ७ | र्त्ते | र्त्तं |
| | सर्गः २ | |
| ७ | मुखी | मुखा |
| ८ | थवे | थ वे |
| १८ | राल् | रिह्ं |
| ३१ | रका | रिका |
| ३४ | था | था सु- |
| ३४ | नयोर् | ने |
| ३७ | रम् | रः |
| ३८ | ति भा | यते |
| ?८ | रत | पद |
| ३८ | हह | ह |
| ४१ | बङ्ग | वङ्ग |
| ४४ | ह्ला | हणा |
| ५३ | विद | दल- |
| ५३ | लतु | यतु |
| ५४ | वरं | वरि |
| ५५ | तने | तनि |
| ५६ | करी- | करा- |
| ५६ | श्वरे | म्बिके |
| ५६ | रती | रसी |
| ५९ | मुखे | मुखं |

| प० | अ० | शु० |
|---|---|---|
| | सर्गः ३ | |
| ९ | तदा | दृशोर् |
| १० | मङ्ग | स्वङ्ग |
| २३ | द्धि | स हि |
| २७ | शरं | शिरं |
| ३० | भूव | भूप |
| ३३ | जेता | जे ता |
| | सर्गः ४ | |
| ९ | मद | मधि |
| ,, | धीत | ताशु |
| १० | करो | कुरो |
| १३ | गत | स्थित |
| १६ | द्भ | द्‌भ |
| १९ | वतो | वता |
| ,, | परि | पद |
| ३० | ल्प | प्ल |
| ३२ | मातृ | मातु |
| ,, | पितृ | रधि |
| ,, | स आ | समा |
| ३७ | त्री | त्रा |
| ३९ | र ज | रज |
| ४९ | स्वा | स्वस |
| ,, | मुता | य वा |

| प० | अ० | शु० | प० | अ० | शु० |
|---|---|---|---|---|---|
| ४९ | सुनि- | प्रति | ३० | इत्थं | बभौ |
| ,, | पुणा | पट्टुर् | ,, | परी | युगे- |
| ५० | यय | य | ,, | वर्त्य | त्रापि |
| ,, | त तु | ततु | ३२ | पारि | परि |
| ,, | नस् | नो | ३४ | षतां | षतः |
| ,, | तत्र | वासु- | ४४ | त्स्वप्ना | द्दृक्स्व |
| ,, | व इ | वमि | ,, | वनौ | प्नभू- |
| ५१ | ढँ | दै | ,, | सम्प्र | मिह्य |
| ५२ | मोप | मे स- | ,, | ति सा | धुना |
| ,, | रिवि | म व | ,, | दृग् | सा |
| ,, | तत्र | तच्च | ४८ | त्के | न्के |
| ५५ | यत | श्रम | ५० | माघ्व | माघ्व |
| ,, | नोत्थ | जन्य | ६१ | कच्चि | कश्चि |
| ५६ | न आ | नमा | ६४ | रंतु | रं तु |
| ,, | र्ण आ | र्णमा | ७३ | छ | छ्ट |
| ५८ | द्विजे | बुधे | ७४ | त्वा | त्वा |
| ६० | ङ्गंतं | ङ्गं तं | ७४ | पिञ्च | षेच |
| ६२ | का सु | कासु | ८३ | घ्य | घ्य |
| ६६ | ले | लं | ८८ | वरे | वरं |
| ,, | दत्र | देतत् | १०० | मुदुर् | दिताः |
| ६८ | लं | ले | ११४ | एम | राम |
| ७१ | ग्रं | ग्रः | ११७ | चोनि | भिरे |
|  | सर्गः ५ |  | ११७ | शाम्य | रेकैर् |
| ४ | स्व | स्व | १२१ | स्वः | रुक्- |
| १६ | जाक्त | जोदि | १२२ | त्वे | त्वं |
| ,, | तिः सा | तं चा | १६० | तदी | तदा |
| १८ | श्रीर | आसीद् | १६० | यादा | नीमा |
| ,, | त्लसिं | हमी |  | सर्गः ६ |  |
| ,, | हस्य | रस्य | २४ | यापश्च | याह्ना |
| ,, | हमी | च र | २८ | ष्तः | प्तः |
| ,, | र कु | ल कु | ३८ | रिथ | स्थि |
| ,, | म्भौ | म्भोः | ५० | द्रत | द्रुत |
| २६ | मयुं | मथुं |  |  |  |

| प० | अ० | शु० |
|---|---|---|
| | **सर्गः ७** | |
| ६ | नय्य | नीय |
| २५ | दीं | दों |
| २६ | णनृ | णन्नृ |
| २६ | नानां | म |
| २६ | गणः | वली |
| २६ | मोंरौ | मोंरो |
| ३५ | वाचो | वाचां |
| ३७ | भूा | भूपा |
| ४० | दष्ट | दृष्ट् |
| ४४ | कस्तु | कास्तु |
| ४४ | सीद् | सन् |
| ४४ | रतः | रताः |
| ५७ | आो | आद्यो |
| | **सर्गः ८** | |
| १३ | त्तंत | त्तंते |
| १६ | येनौ | येतौ |
| १९ | क्षौर् | क्षौः |
| २२ | :सुन्द | रुचि- |
| २४ | मू | मूः |
| २९ | अमी | अमूः |
| ३४ | न | नु |
| ३८ | प्रभं | प्रभा |
| ४३ | न | नु |
| ४३ | मुंख | मुंखः |
| ४४ | घ्न्य | घ्न्य |
| ४५ | थाली | थालीः |
| | **सर्गः ९** | |
| ३ | ओष | औष |
| ४ | बभु | बभ्रु |
| ८ | ती | ती स्पृ- |
| ८ | दम | × |
| ८ | सीमि | × |

| प० | अ० | शु० |
|---|---|---|
| ८ | तस्पृ | × |
| ९ | सदा | निजम् |
| १४ | रम् | रे |
| १४ | क व | कव |
| १५ | सावि | सा वि |
| १५ | लो | से |
| १५ | कस्य | हे च |
| २५ | व्रतं | द्रुवं |
| ३१ | मिलि | मेलि |
| ३७ | ाप | -माप |
| | **सर्गः १०** | |
| १७ | वाश्र | वाश्रु |
| ४२ | त्रस्ति | त्रास्ते |
| ५४ | झ्या | श्या |
| ५७ | श्च प्र | :स्म प्र |
| ५७ | ससा | सार |
| ५७ | रिथ | यति |
| ६८ | स्वमि | स्वामि |
| | **सर्गः ११** | |
| २२ | प्रव | प्रोच्या |
| | **सर्गः १२** | |
| १४ | क्षर | क्षुर |
| ४६ | यस्ताः | तस्याः |
| ५५ | लोव | लोच |
| ५९ | त वा | तवा |
| ६१ | नरी | निरी |
| ६४ | वृत्य | वृत्त्य |
| ७२ | न्नू | प्रो |
| ७८ | नया | नुया |
| ९२ | य' | यं सु- |
| ९२ | शिरो | मौलि |
| ९२ | णिन | णे |
| ९५ | य श्चि | या अ |

| प० | अ० | शु० |
|---|---|---|
| ९५ | देवि | -मम्व |
| ९८ | लितुं | लने |
| १०० | दस्य | दस्यु |
| | **सर्गः १३** | |
| ४१ | यात्र | याद्य |
| ५१ | त्तिम् | ग्निम् |
| ५२ | यस्व | य स्व- |
| ५७ | भुवुः | भूवुः |
| ६० | टाण् | टांष् |
| ८६ | मृ | मृते |
| ९२ | पिम | प्नुम |
| | **सर्गः १४** | |
| ३ | ब्दा | ब्दा |
| २२ | पङ्ग | पङ्गु |
| २६ | य प्री | यश्री |
| ३७ | दुग | दुर्गं |
| ६२ | गु | रिष्टिर् |
| ६२ | रु | गुरु |
| ६२ | रिष्टिर् | × |
| ७४ | ङ्गा | ङ्ग्रा |
| ९५ | ष्ट्ट | ष्ट्टृ |
| | **सर्गः १५** | |
| ६ | होदा | हो दा |
| ७ | वभ | वभू |
| १२ | योर | यो |
| ४६ | परं | घना |
| ,, | तु | -भ्र- |
| ५० | ट ख | टः ख |
| ५५ | दृष्टेर् | यायां |
| ५५ | यां | वं |
| | **सर्गः १६** | |
| ४ | मु | मुदी- |
| ५ | द्र | द्रु |

| प० | अ० | शु० |
|---|---|---|
| ३० | हयु | हय्ु |
| ४८ | न्री | त्री |
| ६८ | ते | - स्ते |
| | **सर्गः १७** | |
| ७ | कीद | कीदृ |
| ३३ | वहुः | दिवम् |
| ३८ | यया | यया- |
| | **सर्गः १८** | |
| १८ | णात | णा त |
| ४६ | अस्या | अस्य |
| ४७ | णं | णँ |
| ४७ | धि | धिं |
| | **सर्गः १९** | |
| ६ | वभ | वँभ |
| १६ | ना | नो |
| ४७ | वैत्र् | वैन् |
| | **सर्गः २०** | |
| २६ | द्धुरः | द्धुरँः |
| ३९ | स्मसा | स्म सा |
| ५५ | भनि | मनि |
| ५८ | स्रम् | स्रशः |
| ६७ | वाड | बाड |
| ७८ | नै | तेनै |
| ७८ | ङ्ग | ङ्गु |
| ८२ | सग | सम |
| ८५ | र्गा | गां |
| ८९ | माथ | माप्य |
| ११२ | मृ | भु |
| ११२ | तोपि | वीह |
| १२३ | यते | य्यते |
| १२३ | तश | त उ |
| १२३ | तानि | दीर्णं |

| प० | अ० | शु० | प० | अ० | शु० |
|---|---|---|---|---|---|
| | सर्गः २१ | | ४४ | दुग | दुर्ग |
| ७ | लाक | लोक | ४६ | शत्र | शत्रु |
| १८ | मुवी | भुवी | ५१ | घि | धि |
| २५ | दल | -दलं | ५४ | ग्रद | ग्रृदि |
| २५ | त्वं | दा- | | सर्गः २२ | |
| २५ | गत- | लय | ३ | द्रत | द्रुत |
| २५ | भीर | द्राग- | १८ | वात | वाते |

● ● ●